# विषयसूची

# शिववासफलम्

(मेरुतन्त्रोक्तम्)

| शुक्लपक्षे | शिववास: | फलम् | कृष्णपक्षे |
|---|---|---|---|
| १(तिथय:) | श्मशाने | मृत्यु: | ७ |
| २ | गौरीसन्निधौ | शुभम् | १ |
| ३ | सभायाम् | तापम् | २ |
| ४ | क्रीडायाम् | सन्तानहानि: | ३ |
| ५ | कैलाशे | सुखम् | ४ |
| ६ | वृषे | श्रीप्राप्ति: | ५ |
| ७ | भोजने | भोजनप्राप्ति: | ६ |
| ८ | श्मशाने | मृत्यु: | ७ |
| ९ | गौरीसन्निधौ | शुभम् | ८/३० |
| १० | सभायाम् | तापम् | ९ |
| ११ | क्रीडायाम् | सन्तानहानि: | १० |
| १२ | कैलाशे | सुखम् | ११ |
| १३ | वृषे | श्रीप्राप्ति: | १२ |
| १४ | भोजने | भोजनप्राप्ति: | १३ |
| १५ | श्मशाने | मत्यु: | १४ |

## प्रमाणम्

*गणनासूत्रम्:—*

तिथिञ्च द्विगुणीकृत्य पञ्चभिश्च समन्वितम् ।
सप्तभिश्च हरेद्भागं शिववासफलं लभेत् ॥

*शिववास:—*

एके कैलाशवास: स्याद्द्वितीये गौरीसन्निधौ ।
तृतीये वृषभारूढ: सभायाञ्च चतुर्थके ॥
पञ्चमे भोजने चैव षष्ठे क्रीडारतस्तथा ।
श्मशानेऽद्रौ तथा शेषे शिववासफलं भवेत् ॥

*फलम्:—*

कैलाशे तु भवेत्सौख्यं गौर्यङ्के च सुखप्रदम् ।
वृषारूढे च श्रीप्राप्ति: सभा सन्तापकारिणी ॥
भोजने भोजनप्राप्ति: क्रीडा सन्तानहारिणी ।
श्मशाने मृत्युमाप्नोति शिववासफलं लभेत् ॥

*॥ इति शिववासफलविचार: ॥*

# चतुर्लिङ्गतोभद्रचक्रम्




रेखास्त्वष्टादश प्रोक्ताश्चतुर्लिङ्गसमुद्भवे ।
कोणेन्दुत्रिपदैः श्वेतास्त्रिपदैः कृष्णशृङ्खलाः ॥
वल्ली सप्तपदा नीला भद्रं रक्तं चतुष्पदम् ।
भद्रपार्श्वे महारुद्रं कृष्णमष्टादशैः पदैः ॥
शिवस्य पार्श्वतो वापीं कुर्यात्पञ्चपदां सिताम् ।
पदमेकं तथा पीतं भद्रवाप्योस्तु मध्यतः ॥
शिरसि शृङ्खलायाश्च कुर्यात्पीतं पदत्रयम् ।
लिङ्गानां स्कन्धतः कोष्ठा विंशती रक्तवर्णकाः ॥
परिधिः पीतवर्णैस्तु पदैः षोडशभिः स्मृताः ।
पदैस्तु नवभिः पश्चाद्रक्तं पद्मं सकर्णिकम् ॥

# शिवपूजनविधिः

कर्ता कृतनित्यक्रियः सम्पादितसामग्रीकः पूर्वाभिमुखः शुद्धासने समुपविश्य उपवीती बद्धशिखः पञ्चगव्यप्राशनं कृत्वा पूजारम्भं कुर्यात्।

*तत्रादौ भस्मधारणम्–*

**ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम्॥**

**यद्देवेषुत्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम्॥**

*ततः शिखाबन्धनम्–*

**ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्श्वेषुरीरिषः॥**

**मानोव्वीरान्रुद्द्रभामिनोव्वधीर्हविष्मन्तः सदमित्त्वाहवामहे॥**

*रुद्राक्षमालाधारणम्–*

**ॐ त्र्यम्बकंय्यजामहेसुगन्धिं पुष्टिवर्धनम्।**

**उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्॥**

*पवित्रधारणम्–*

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः॥ तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्॥**

*आचमनम्–*

**ॐ केशवाय नमः, ॐ नारायणाय नमः, ॐ माधवाय नमः।**

हस्तप्रक्षालनम् – **ॐ गोविन्दाय नमः**। गायत्र्या प्राणायामत्रयं विधाय कर्मपात्रनिर्माणं कुर्यात्। स्वस्य दक्षिणे ताम्रपात्रं निधाय तत्र देवानावाहयेत् –

**ॐ यद्देवादेवहेडनन्देवासश्चकृमाव्वयम्।**

**अग्निर्मातस्मादेनसोव्विश्श्वान्मुञ्चत्वꣳहसः॥**

**यदिदिवायदिनक्तमेनाꣳसिचकृमाव्वयम्।**

**वायुर्मातस्मादेनसोव्विश्श्वान्मुञ्चत्वꣳहसः॥**

**यदिजाग्ग्रद्यदिस्वप्नऽएनाꣳसिचकृमाव्वयम्।**

**सूर्योमातस्मादेनसोव्विश्श्वान्मुञ्चत्वꣳहसः॥**

ततः पवित्रं क्षिपेत् –

**ॐ पवित्रेस्थो वैष्णव्यो सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः॥ तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्॥**

जलम्–

ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये । शंय्योरभिस्रवन्तुनः ॥

चन्दनम्–

ॐ गन्धद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

अक्षतान्–

ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ।
अस्तोषतस्वभानवोविप्रानविष्ठयामतीय्योजान्विद्रते हरी ॥

यवान्–

ॐ यवोसि यवयास्मद्द्वेषो यवयारातीर्दिवे त्वान्तरिक्षाय त्वा ।
पृथिव्यै त्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥

तिलान्–

ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः ।
प्रत्क्नमद्भिः पृक्तः स्वधया पितॄँल्लोकाँन् पृणाहि नः ॥

पुष्पाणि–

ॐ श्रीश्चतेलक्ष्मीश्चपत्क्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥
इष्णन्निषाणामुम्मऽइषाणसर्व्वलोकम्मऽइषाण ॥

*ततः कुशत्रयसहितं कर्मपात्रोदकमादाय पवित्रीकरणम्–*

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरं शुचिः ॥
ॐ पुण्डरीकाक्षः पुनातु ३ । इति पूजाद्रव्याणि आत्मानं च सिञ्चेत् ।

सर्षपविकिरणम्–

ॐ अपसर्पन्तु ते भूता ये भूता भूमिमाश्रिताः ।
ये भूताः विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥
अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् ।
सर्वेषामविरोधेन शिवकर्म समारभे ॥

## प्रायश्चित्तगोदानम्–

नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ।
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥
ॐ इरावती धेनुमतीहि भूतꣳसूयवसिनीमनवे दशस्या ॥
व्यस्कभ्ना रोदसी विष्णवे ते दाधर्त्थ पृथिवीमभितो मयूखैः स्वाहा ॥

**ॐ गवे (गोप्रतिनिधिद्रव्याय) नमः** गन्धाक्षतपुष्पाणि समर्पयामि ।

*मार्जनम्–*

**ॐ मनो मे तर्प्पयत वाचं मे तर्प्पयत प्राणम्मे तर्प्पयत चक्षुर्म्मे तर्प्पयत श्रोत्रम्मे तर्प्पयतात्मानम्मे तर्प्पयत प्रजाम्मे तर्प्पयत पशून्मे तर्प्पयत गणान्मे तर्प्पयत गणामे मावितृषन् ॥**

*ब्राह्मणपूजनम्–*

**ॐ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।**
**जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥**

*गोपुच्छोदकमादाय–*

हरिः ॐ तत्सत् विष्णुर्विष्णुर्विष्णुः अद्य ब्रह्मणो द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे वैवश्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे तत्प्रथमचरणे जम्बूद्वीपे भारतवर्षे भरतखण्डे ... क्षेत्रे ... स्थाने बौद्धावतारे षष्ठीसंवत्सराणां मध्ये ... संवत्सरे श्रीसूर्ये... अयने... ऋतौ... मासे... पक्षे... तिथौ... वासरे ... गोत्रः... प्रवरः ... शर्मा/वर्मा/गुप्तः अहं मम सपरिवारस्य कायिक-वाचिकमानसिक-सांसर्गिकज्ञाताज्ञातास्पृश्यस्पर्शनाभक्ष्यभक्षणाचोष्यचोषणालेह्यलेहनाभोज्य-भोजनादिजनितसकलपापक्षयपूर्वककरिष्यमाणसाम्बशिवाराधनादि-कर्मण्यधिकारसिद्धये, इदं प्रायश्चित्तनिमित्तकगोनिष्क्रयीभूतं द्रव्यं रौप्यं चन्द्रदैवतं राजमुद्राङ्कितं लक्ष्मीदैवतं वा अमुकगोत्राय अमुकशर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

ब्राह्मणः ॐ स्वस्तिः । ततः प्रार्थना –

**ॐ कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**
**तीर्थदेवमयी यस्मात्तस्माच्छान्तिं प्रयच्छ मे ॥**
**गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ।**
**गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥**

*दानप्रतिष्ठाद्रव्यमादाय–*

अद्य कृतैतत्प्रायश्चित्तनिमित्तकगोनिष्क्रयीभूतद्रव्यदानकर्मणः साङ्गता-सिद्ध्यर्थमिदं दानप्रतिष्ठाद्रव्यं रौप्यखण्डं चन्द्रदैवतम्, अन्यदद्रव्यं लक्ष्मीदैवतं वा अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे ।

ततः ब्राह्मणः कामस्तुतिं पठेत्–

ॐ कोदात्कस्माऽअदात्कामोदात्कामायादात् ॥
कामोदाताकामः प्रतिग्रहीताकामैतत्ते ॥
ॐ शान्तिः । ब्राह्मणः– ॐ प्रायश्चित्तसिद्धिरस्तु ।

## दीपप्रज्वालनम्–

ॐ स्थिरोभवविड्वङ्गऽआशुर्ब्भवबाज्ज्यर्वन् ।
पृथुर्ब्भवसुखदस्त्वमग्ग्नेः पुरीषवाहणः ॥

## स्वस्तिवाचनम्–

ॐ आनोभद्राः क्क्रतवोयन्तुव्विश्श्वतोदब्धासोऽअपरीतासऽउद्भिदः ॥
देवानोयथासदमिद्वृधेऽअसन्नप्प्रायुवोरक्क्षितारोदिवेदिवे ॥१॥
देवानांभ्भद्रासुमतिर्ऋजूयतान्देवानां ॐ रातिरभिनोनिवर्त्तताम् ॥
देवानां ॐ सक्ख्यमुपसेदिमाव्वयन्देवानऽआयुः प्प्रतिरन्तुजीवसे ॥२॥
तान्पूर्व्वयानिविदाहूमहेव्वयंभगम्मित्रमदितिन्दक्क्षम्मस्त्रिधम् ॥
अर्य्यमणंव्वरुण ॐ सोमम्मश्श्विनासरस्वतीनः सुभगामयस्क्करत् ॥३॥
तन्नोव्वातोमयोभुव्वातुभेषजन्तन्मातापृथिवीतत्प्पिताद्यौः ॥
तदग्रावाण ॐ सोमसुतोमयोभुवस्त्तदश्श्विनाशृणुतन्धिष्ण्ण्याषुवम् ॥४॥
तमीशानञ्जगतस्त्तस्त्थुषस्प्पतिन्धियञ्जिन्न्वमवसेहूमहेव्वयम् ॥
पूषानोयथाव्वेदसामसद्वृधेरक्क्षितापायुरदब्धः स्वस्तये ॥५॥
स्वस्तिनऽइन्द्रोव्वृद्धश्श्रवाः स्वस्तिनः पूषाव्विश्श्ववेदाः ॥
स्वस्तिनस्ताक्क्ष्र्योऽअरिष्टनेमिः स्वस्तिनोबृहस्प्पतिर्द्दधातु ॥६॥
पृषदश्श्वामरुतः पृश्श्निम्मातरः शुभँय्यावानोव्विदथेषुजग्ग्मयः ॥
अग्ग्निजिह्व्वामनवः सूरचक्क्षसोव्विश्श्वेनोदेवाऽअवसागमन्निह ॥७॥
भद्द्रङ्कर्णेभिः शृणुयामदेवाभद्द्रम्प्पश्श्येमाक्क्षभिर्य्यजत्राः ॥
स्थिरैरङ्गैस्त्तुष्टुवा ॐ सस्तनूभिर्व्व्यशेमहिदेवहितंय्यदायुः ॥८॥
शतमिन्नुशरदोऽअन्तिदेवायत्रानश्श्चक्राजरसन्तनूनाम् ॥
पुत्रासोयत्रपितरोभवन्तिमानोमद्ध्यारीरिषतायुर्ग्गन्तोः ॥९॥
अदितिर्द्द्यौरदितिरन्तरिक्क्षमदितिर्म्मातासपितासपुत्रः ॥

व्विश्श्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्त्वम् ॥१०॥
द्यौ:शान्तिरन्तरिक्षꣳशान्तिः पृथिवीशान्तिरापꣳशान्तिरोषधयꣳशान्तिः ॥
व्वनस्प्पतयꣳ शान्तिर्व्विश्श्वेदेवाः शान्तिर्ब्रह्मशान्तिꣳ सर्व्वꣳ शान्तिꣳ
शान्तिरेवशान्तिꣳ सामाशान्तिरेधि ॥११॥
यतोयतꣳ समीहसेततोनोऽअभयङ्कुरु ॥
शन्नः कुरुप्प्रजाब्भ्योभयन्नꣳ पशुब्भ्यः ॥१२॥
व्विश्श्वानिदेवसवितर्द्दुरितानिपरासुव ॥ यद्भद्द्रन्तन्नऽआसुव ॥१३॥

*ॐ शान्तिः शान्तिः शान्तिः सुशान्तिर्भवतु ॥ सर्वारिष्टशान्तिर्भवतु ।*

ॐ श्रीमन्महागणाधिपतये नमः । ॐ उमामहेश्वराभ्यां नमः । ॐ लक्ष्मी-नारायणाभ्यां नमः । ॐ वाणीहिरण्यगर्भाभ्यां नमः । ॐ शचीपुरन्दराभ्यां नमः । ॐ मातापितृचरणकमलेभ्यो नमः । ॐ इष्टदेवताभ्यो नमः । ॐ कुलदेवताभ्यो नमः । ॐ स्थानदेवताभ्यो नमः । ॐ ग्रामदेवताभ्यो नमः । ॐ वास्तुदेवताभ्यो नमः । ॐ सर्वेभ्यो देवेभ्यो नमः । ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः । ॐ सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः ॥

**ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।**
**लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥**
**धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।**
**द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥**
**विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।**
**संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥**
**शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।**
**प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥**
**अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।**
**सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥**
**तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।**
**विद्याबलं देवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥**

*॥इति मङ्गलाचरणम् ॥*

## प्रतिज्ञासङ्कल्पः–

ॐ तत्सत् विष्णुर्विष्णुर्विष्णुः अद्य श्रीमद्भगवतो महापुराणपुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य सकलजगतः सृष्टिकारिणो ब्रह्मणो द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे वैवश्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे तत्प्रथमचरणे भूर्लोके जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गतहिमवद्दक्षिणभूभागे नेपालदेशे पाशुपतक्षेत्रे पशुपतेः गुह्यकाल्याश्च ... दिग्भागे ... क्षेत्रे ... स्थाने बौद्धावतारे षष्ठीसंवत्सराणां मध्ये ... नाम्नि संवत्सरे (उत्तर/दक्षिण) गोलावलम्बिनि मार्तण्डमण्डले ... ऋतौ... ... मासे... ... पक्षे... ... तिथौ ... ... वासरे... ... राशिस्थिते सवितरि... ... राशिस्थिते चन्द्रमसि... ... राशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथाराशिस्थितेषु सत्सु एवं ग्रहगणगुणविशेषविशिष्टायां शुभपुण्यतिथौ ... ... गोत्रः ... प्रवरः ... शर्मा/वर्मा/गुप्तः सपत्नीकः सपरिवारो वा अहं ममात्मनः सभार्यस्य सपुत्रपौत्रस्य सकुटुम्बस्य इह जन्मनि जन्मान्तरे वा समर्जितकायिकवाचिकमानसिकादि-समस्तप्रत्यवायपरिहारपूर्वकमायुरारोग्यैश्वर्योत्तरोत्तरहर्षविजयोदयपूर्वक-दारिद्र्यदुःखदुर्भिक्ष्यदौर्मनस्यदौर्भाग्योपसर्गमहामारीत्रासोल्कापातनिर्घात-भूकम्पादिसूचितसकलदोषोपशान्त्यर्थं तथा प्रतिकूलस्थानस्थितसूर्यादि-नवग्रहाणां प्रातिकूल्योपशमनपूर्वकमानुकुल्यसिद्धये दुःस्वप्नसुस्वप्नतावाप्ति-पूर्वकबालग्रहदशान्तर्दशागोचरदशादिसकलदोषोपशमनार्थं तथा बाह्याभ्यन्तर-ज्वरातिसारापस्मारश्वासकासादिसमस्तरोगनिवृत्तिपूर्वकदीर्घायुरारोग्यैश्वर्याद्य-भिवृद्ध्यर्थं तथाध्यात्मिकाधिदैविकाधिभौतिकाभिधतापत्रयोपशमनपूर्वक-धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थफलप्राप्तये विशेषतः श्रीपरमेश्वर-साम्बसदाशिवप्रीतये तत्प्रसादात् साम्बसदाशिवे श्रीविद्येश्वरे अविच्छिन्न-भक्तिफलावाप्तये तथा तदनुकम्पया सर्वपापक्षयपूर्वकसर्वारिष्टनिरसनार्थं श्रुतिस्मृतिपुराणोक्तफलप्राप्तये च यथोपचारैः श्रीसाम्बसदाशिवपूजनपूर्वकं जल (पयो) धारया अमुकसङ्ख्यकरुद्राभिषेकं तथा सप्तशतीपारायणञ्च ब्राह्मणद्वारा कारयिष्ये/करिष्ये । तदङ्गत्वेन करिष्यमाणकर्मणि निर्विघ्नतासिद्ध्यर्थं दीपकलशगणेशादीनां पूजनं ब्राह्मणवरणं पुण्याहवाचनञ्च करिष्ये ।

## अर्घ्यस्थापनम्–

स्वस्य दक्षिणे त्रिकोणं षट्कोणं वा विलिख्य तत्र त्रिपादिकां निधाय तस्योपरि अर्घ्यपात्रं संस्थाप्य जलादिभिः गन्धादिभिः पूजयेत् ।

**आपः क्षीरं कुशाग्राणि दध्याज्यतिलतण्डुलान् ।**
**दूर्वा सिद्धार्थकं ग्राह्यमष्टाङ्गो ह्यर्घ्य उच्यते ॥**
**ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति ।**
**नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥**

इति मन्त्रेणाङ्कुशमुद्रया सूर्यमण्डलाद्गङ्गादिनदीरावाह्य धेनुमुद्रयाऽमृतीकृत्य मत्स्यमुद्रयाच्छाद्य प्रणवेन अष्टधा अभिमन्त्रयेत् ।

**ॐद्वादशकलात्मनेसूर्यमण्डलायनमः,ॐषोडशकलात्मनेसोममण्डलाय नमः, ॐ दशकलात्मने वह्निमण्डलाय नमः** इति सम्पूज्य तत्रस्थजलेन पूजासामग्रीमात्मानं च प्रोक्ष्य सूर्याय अर्घ्यं दद्यात् ।

**ॐ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते ।**
**अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर ॥**

ॐ भूर्भुवः स्वः कर्मसाक्षिणे श्रीसूर्यनारायणाय नमः ।

## शङ्खपूजनम्–

**ॐ त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।**
**निर्मितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ॥**
**ॐ पाञ्चजन्याय विद्महे पावमानाय धीमहि । तन्नः शङ्खः प्रचोदयात् ॥**
**ॐ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥**

ॐ भूर्भुवः स्वः शङ्खस्थदेवाय नमः ॥

## घण्टापूजनम्–

**ॐ सुपर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रञ्चक्षुर्बृहद्रथन्तरे पक्षौ । स्तोम आत्माच्छन्दा ꣳ स्यङ्गानि यजू ꣳ षि नाम साम ते तनूर्व्वामदेव्यम् ॥ यज्ञायज्ञियंपुच्छन्धिष्ण्याः शफाः सुपर्णोऽसि गरुत्मान्दिवङ्गच्छ स्वः पत ॥**

ॐ भूर्भुवः स्वः घण्टास्थाय गरुडाय नमः ।

**ॐ तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।**
**भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥**

इति भैरवानुज्ञां गृहीत्वा दीपगणेशकलशादीन् पूजयेत् –

## अथ दीपपूजा–

**ॐ पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यां पृष्टो विश्वाऽओषधीराविवेश।**
**वैश्वानरः सहसा पृष्टोऽअग्निः स नो दिवा सरिषस्पातु नक्तम् ॥**

**ॐ नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**
**सहस्रनाम्ने पुरुषाय शश्वते सहस्रकोटीयुगधारिणे नमः ॥**

*ततो हस्ते पुष्पादीन्यादाय–*

**ॐ नमः कमलनाभाय नमस्ते जलशायिने ।**
**नमस्ते केशवानन्त वासुदेव नमोऽस्तु ते ॥**
**वासनाद्वासुदेवस्य वासितं भुवनत्रयम् ।**
**सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥**
**शुभं भवतु कल्याणमारोग्यं सुखसम्पदः ।**
**सर्वशत्रुविनाशाय दीपज्योतिर्नमोऽस्तु ते ॥**

ॐ भूर्भुवः स्वः कर्मसाक्षिणे दीपनारायणाय नमः । इति प्रार्थयेत् ।

*॥ इति दीपपूजनम् ॥*

## गणेशपूजा–

पूर्वसङ्कल्पमुच्चार्य अमुकोऽहं करिष्यमाण-(अमुक)-कर्मणो निर्विघ्नपरिसमाप्त्यर्थं यथासंपादितोपचारैः श्रीमन्महागणाधिपतिपूजनङ्करिष्ये।

*इति सङ्कल्प्य ध्यानं कुर्यात्–*

**गजाननं भूतगणाधिसेवितं कपित्थजम्बूफलचारुभक्षणम् ॥**
**उमासुतं शोकविनाशकारकं नमामि विघ्नेश्वरपादपङ्कजम् ॥**

*ततः आवाहनम्–*

**ॐ गणानान्त्वागणपतिꣳ हवामहेप्प्रियाणान्त्वाप्प्रियपतिꣳ हवामहेनिधीनान्त्वानिधिपतिꣳ हवामहेव्वसोमम ॥ आहमजानिगब्र्भध मात्वमजासिगब्भर्धम् ॥**

ॐ भुर्भुवः स्वः सिद्धिबुद्धिसहित साङ्ग सायुध सवाहन सपरिवार श्रीमन् महागणाधिपते ! इहागच्छ इह तिष्ठ मम पूजां गृहाण यावत्पूजां करोमि तावत्त्वं सुस्थिरो भव ॥ **इत्यावाह्य–** ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय साङ्गाय

सायुधाय सवाहनाय सपरिवाराय श्रीमते महागणाधिपतये नमः– *ॐ पुरुषऽएवेद०* इति इदमासनम्, *ॐ एतावानस्य०* इति पाद्यम्, *ॐ त्रिपादूर्ध्व०* *इति* अर्घ्यम्, *ॐ ततो विराट्०* इति आचमनीयम्, *ॐ पञ्चनद्यः०* *इति* पञ्चामृतम्, *ॐ शुद्धबालः०* *इति* स्नानीयम्, ततः पुनराचमनीयम्, समर्पयामि । ततः महाभिषेकस्नानम्–

## गणपत्यथर्वशीर्षम्–

ॐ नमस्ते गणपतये । त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्तासि । त्वमेव केवलं धर्तासि । त्वमेव केवलं हर्तासि । त्वमेव सर्वं खल्विदं ब्रह्मासि । त्वं साक्षादात्मासि नित्यम् । ऋतं वच्मि । सत्यं वच्मि । अव त्वं माम् । अव वक्तारम् । अव श्रोतारम् । अव दातारम् । अव धातारम् । अवानूचानम् । अव शिष्यम् । अव पश्चात्तात् । अव पुरस्तात् । अवोत्तरात्तात् । अव दक्षिणात्तात् । अव चोर्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि, पाहि समन्तात् । त्वं वाङ्मयस्त्वं चिन्मयः । त्वमानन्दमयस्त्वं ब्रह्ममयः । त्वं सच्चिदानन्दाद्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं ज्ञानमयो विज्ञानमयोऽसि । सर्वं जगदिदं त्वत्तो जायते । सर्वं जगदिदं त्वत्तस्तिष्ठति । सर्वं जगदिदं त्वयि लयमेष्यति । सर्वं जगदिदं त्वयि प्रत्येति । त्वं भूमिरापोऽनलोऽनिलो नभः । त्वं चत्वारि वाक्पदानि । त्वं गुणत्रयातीतः । त्वमवस्थात्रयातीतः । त्वं देहत्रयातीतः । त्वं कालत्रयातीतः । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः । त्वां योगिनो ध्यायन्ति नित्यम् । त्वं ब्रह्मा । त्वं विष्णुः । त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्म भूर्भुवः स्वरोम् । गणादीन्पूर्वमुच्चार्य वर्णादीँस्तदनन्तरम् । अनुस्वारः परतरः । अर्धेन्दुलसितम् । तारेण रुद्धम् । एतत्तव मनुस्वरूपम् । गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् । विन्दुरुत्तररूपम् । नादः सन्धानम् । संहिता सन्धिः । सैषा गणेशविद्या । गणक ऋषिः । निचृद्गायत्रीच्छन्दः । गणपतिर्देवता । ॐ गं गणपतये नमः । एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् । एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् । रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् । रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् । भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः । नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्तये नमः ॥

महाभिषेकस्नानं समर्पयामि श्रीमन्महागणाधिपतये नमः ॥ ततः ॐ *तस्माद्यज्ञात्०* इति वस्त्रम्, ॐ *तस्मादश्वा०* इति यज्ञोपवीतम्, ॐ *तं यज्ञम्०* इति चन्दनम्, ॐ *अक्षन्न०* इति अक्षतान्, ॐ *यत्पुरुषम्०* इति पुष्पाणि, ॐ *काण्डात्०* इति दूर्वाङ्कुराणि, ॐ *ब्राह्मणोस्य०* इति धूपम्, ॐ *चन्द्रमा०* इति दीपम्, ॐ *नाभ्या०* इति नैवेद्यम्, ॐ *यत्पुरुषेण०* इति आचमनीयम्, पूगीफलम्, ॐ *या फलिनी०* इति फलम्, ॐ *हिरण्यगर्भः०* इति दक्षिणाम् च समर्पयामि।

## दूर्वाङ्कुरपूजा–

ॐ गणाधिप नमस्तेऽस्तु, ॐ उमापुत्र नमस्तेऽस्तु, ॐ अघनाशन नमस्तेऽस्तु, ॐ विनायक नमस्तेऽस्तु, ॐ ईशपुत्र नमस्तेऽस्तु, ॐ सर्वसिद्धिप्रदायक नमस्तेऽस्तु, ॐ एकदन्त नमस्तेऽस्तु, ॐ इभवक्त्र नमस्तेऽस्तु, ॐ मूषकवाहन नमस्तेऽस्तु, ॐ कुमारगुरवे तुभ्यं नमस्तेऽस्तु, ॐ सिद्धिबुद्धिसहिताय श्रीगजाननाय नमः।

**ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि ॥**

**एवा नो दूर्व्वे प्प्रतनुसहस्रेण शतेन च ॥**

ॐ भूर्भुवः स्वः गणपतये नमः दूर्वाङ्कुरान् समर्पयामि।

ॐ भूर्भुवः स्वः गणपतये नमः पादवन्दनं ॐ *सप्तास्यासन्०* इति प्रदक्षिणां ॐ *यज्ञेन०* इति पुष्पाञ्जलिञ्च समर्प्य हस्ते फलादिकमादाय स्तुतिं कुर्यात्–

**ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक।**
**भक्तानामभयङ्कर्ता त्राता भव भवार्णवात् ॥**
**द्वैमातुर कृपासिन्धो षाण्मातुराग्रज ! प्रभो।**
**वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥**
**अनेन फलदानेन फलदोऽस्तु सदा मम ॥**

इति फलं समर्पयेत्। *ततः प्रार्थना–*

**विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय।**
**नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥**
**अविरलमदजलनिवहं भ्रमरकुलानेकसेवितकपोलम्।**
**अभिमतफलदातारं कामेशं गणपतिं वन्दे ॥**
**वक्रतुण्ड महाकाय कोटिसूर्यसमप्रभ।**
**अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥**

अनया पूजया श्रीमन्महागणाधिपतिः प्रीयतां न मम।

*॥ इति गणेशपूजनम् ॥*

## कलशपूजा–

*अथ भूरसीति भूमिशोधनम्–*

ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ।
पृथिवीं यच्छ पृथिवीन्दृꣳह पृथिवीम्मा हिꣳसीः ॥

*धान्यमसीति धान्यं स्थापयेत्–*

ॐ धान्यमसि धिनुहि देवान् प्राणायत्वोदानाय त्वा व्यानाय त्वा । दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि ॥

*आजिघ्रेति कलशं स्थापयेत्–*

ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः । पुनरुर्जा निवर्तस्व सा नः सहस्रन्धुक्ष्वोरुधारा पयस्वतीः पुनर्मा विशताद्रयिः ॥

*इमम्मे वरुणेति तीर्थादिजलं प्रक्षिपेत्–*

ॐ इमम्मे वरुणश्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥

*याऽओषधीरिति सर्वौषधीः प्रक्षिपेत्–*

ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनैनु बभ्रूणामहꣳशतं धामानि सप्त च ॥

*हिरण्यगर्भ इति पञ्चरत्नानि–*

ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।
स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥

*याः फलिनीरिति फलानि–*

ॐ याः फलीनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳ हसः ॥

*यवोसीति यवान्–*

ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीर्दिवेत्वान्तरिक्षाय त्वा ।
पृथिव्यै त्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥

*गन्धद्वारामिति गन्धम्–*

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

*काण्डात्काण्डादिति दूर्वाः –*

ॐ काण्डात् काण्डात्प्ररोहन्ती परुषः परुषस्परि ।

एवानो दूर्वे प्रतनु सहस्रेण शतेन च ॥

*स्योनापृथिवीति सप्तमृदः –*

ॐ स्योना पृथिवि नो भवा नृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ।

*अश्वत्थेव इति पञ्चपल्लवैस्तन्मुखमाच्छाद्य–*

ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।

गोभाजऽइत्किलासथ यत्सनवथ पूरुषम् ॥

*बृहस्पत इति वस्त्रयुग्मेन कलशं वेष्टयेत्–*

ॐ बृहस्पतेऽअति यदर्य्योऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ।

यद्दीदयच्छवसऽऋतप्प्रजाततदस्मासुद्रविणं धेहि चित्रम् ॥

उपयामगृहीतोसि बृहस्पतये त्वैषते योनिर्बृहस्पतये त्वा ।

*अम्बे अम्बिक इति इति आम्रपल्लवादिभिस्तन्मुखमाच्छादयेत्–*

ॐ अम्बेऽअम्बिकेम्बालिके न मानयति कश्चन ।

ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥

*ततः तत्त्वायामीति वरुणमावाह्य पूजयेत् –*

ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।

अहेडमानो वरुणेह बोद्ध्युरुशꣳ समानऽआयुः प्रमोषीः ॥

*तत्रैव सर्वे समुद्रा इति तीर्थान्यावाहयेत् –*

ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।

आयान्तु यजमानस्य दुरितक्षयकारकाः ॥

*ततः कलशं स्पृष्ट्वाभिमन्त्रयेत् –*

ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।

मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥

कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ।

ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ॥

अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥

*ततः कलशं प्रार्थयेत् –*

ॐ देवदानवसंवादे मथ्यमाने महोदधौ ।
उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥
शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।
आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।
त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥
सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ॥

*ततः कलशस्कन्धप्रदेशे पूर्णपात्रं निधाय तत्र प्रतिमादौ पूगीफले वा गणपत्यादिदेवान् सम्पूजयेत्–*

ॐ गणपत्यादिपञ्चायतनेभ्यो नमः। ॐ विनायकादिपञ्चलोकपालेभ्यो नमः।
ॐ सूर्यादिनवग्रहेभ्यो नमः । ॐ ईश्वराद्यधिदेवेभ्यो नमः ।
ॐ अग्न्यादिप्रत्यधिदेवेभ्यो नमः । ॐ इन्द्रादिदशदिक्पालेभ्यो नमः ।
ॐ ध्रुवाद्यष्टवसुभ्यो नमः । ॐ धात्रादिद्वादशादित्येभ्यो नमः ।
ॐ वीरभद्राद्येकादशरुद्रेभ्यो नमः । ॐ गौर्यादिषोडशमातृभ्यो नमः ।
ॐ आवहादिसप्तमरुद्भ्यो नमः। ॐ विनायकाय नमः। ॐ ब्रह्मणे नमः।
ॐ विष्णवे नमः। ॐ रुद्राय नमः। ॐ अर्काय नमः। ॐ वनस्पतिभ्यो नमः।

इति नाममन्त्रेण यथासम्पादितपाद्यादिधूपदीपनैवेद्यान्तैरुपचारैः सम्पूज्य-प्रार्थयेत्–

सूर्यः शौर्यमथेन्दुरिन्द्रपदवीं सन्मङ्गलं मङ्गलः
सद्बुद्धिञ्च बुधो गुरुश्च गुरुतां शुक्रः सुखं शं शनिः ।
राहुर्बाहुबलं करोतु सततं केतुः कुलस्योन्नतिं
नित्यं प्रीतिकरा भवन्तु मम ते सर्वेऽनुकूला ग्रहाः ॥
आयुश्च वित्तञ्च तथा सुखञ्च धर्मार्थलाभौ बहुपुत्रताञ्च ।
शत्रुक्षयं राजसु पूज्यताञ्च तुष्टा ग्रहाः क्षेमकरा भवन्तु ॥

## ब्राह्मणवरणम्–

*गन्धपुष्पाक्षतफलवस्त्रद्रव्यादिवरणसामग्रीं सम्पाद्य सङ्कल्पं कुर्यात् –*

हरिः ॐ तत्सत् विष्णुः पूर्वोक्तसङ्कल्पसिद्धिरस्तु मम सपरिवारस्य पूर्वोक्त फलावाप्तये सूर्यादिनवग्रहजनितदोषोपशमनपूर्वकं साम्बसदाशिवप्रसादात् सकलमनईप्सितकामनासिद्धये साम्बसदाशिवप्रीतये च साम्बसदाशिव–पूजनपूर्वकं साम्बसदाशिवोपरि अविच्छिन्नजल(पयो)धारया अमुकसङ्ख्यक–ब्राह्मणद्वारा अमुकरुद्राभिषेककर्म कर्तुं तथा सकलारिष्टशान्तये श्रीमहाकाली-महालक्ष्मीमहासरस्वतीप्रीतये मार्कण्डेयपुराणान्तर्गतसाङ्गोपाङ्गसप्तशतीस्तोत्र-पाठाख्यकर्म कर्तुं नानानामगोत्रान्नानानामशर्मणो ब्राह्मणानेभिश्चन्दनगन्ध-पुष्पाक्षतफलवस्त्रद्रव्यादिभिरहं वृणे। ब्राह्मणाः- **ॐ वृताःस्मः ॥**

## पुस्तकपूजनम्–

**ॐ सरस्वती योन्यां गर्भमन्तरश्विभ्यां पत्नी सुकृतं बिभर्ति। अपा ᳪ रसेन वरुणेन साम्नेन्द्र ᳪ श्रियै जनयन्नप्सु राजा ॥**

**शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं**
**वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम् ।**
**हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां**
**वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥**

**ॐ पुस्तकवासिन्यै सरस्वतीदेव्यै नमः। ॐ वेदपुरुषाय नमः। ॐ पुराणपुरुषोत्तमाय नमः।** इति पुस्तके सरस्वतीं पूजयेत्।

## ब्राह्मणपूजनम्–

**ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेन ऽआवः ॥ सबुध्न्याऽउपमा ऽअस्य विष्ठाः शतश्च योनिम शतश्चविवः ॥**

**ॐ ब्रह्मणे नमः।**

## पुण्याहवाचनम्–

पुण्याहवाचनार्थं त्रीन् चतुरः पञ्च वा ब्राह्मणान् वृत्वा प्राङ्मुखो यजमानः कृताञ्जलिः पठेत्–

*ॐ अद्येह पूर्वोक्तसङ्कल्पसिद्धिरस्तु अमुकगोत्रः, अमुकशर्माहं करिष्यमाणरुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः ! ॐ पुण्याहं भवन्तो ब्रुवन्तु ३।* इति त्रिवारं पठेत्। ब्राह्मणाश्च- **ॐ पुण्याहम् ३** इति त्रिः।

ततो ब्राह्मणाः–

**ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।**
**पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥**

*ॐ अद्येह पूर्वोक्तसङ्कल्पसिद्धिरस्तु अमुकगोत्रः, अमुकशर्माहं करिष्यमाणरुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः !* **ॐ स्वस्तिर्भवन्तो ब्रुवन्तु** ३ । ब्राह्मणाः– **ॐ स्वस्तिः ३ ।**

**ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाव्विश्ववेदाः ।**
**स्वस्तिनस्ताक्ष्योंऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥**

*ॐ अद्येह पूर्वोक्तसङ्कल्पसिद्धिरस्तु अमुकगोत्रः, अमुकशर्माहं करिष्यमाणरुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः !* **ॐ ऋद्धिं भवन्तो ब्रुवन्तु**–३ । ब्राह्मणाः– **ॐ ऋद्धिः ३ ।**

**ॐ सत्रस्यऽऋद्धिरस्यगन्मज्योतिरमृताऽअभूम ।**
**दिवं पृथिव्याऽअध्यारुहामा विदाम देवान्त्स्वज्ज्योतिः ॥**

*ॐ अद्येह पूर्वोक्तसङ्कल्पसिद्धिरस्तु अमुकगोत्रः, अमुकशर्माहं करिष्यमाणरुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः !* **ॐ वृद्धिं भवन्तो ब्रुवन्तु** ३ । ब्राह्मणाः– **ॐ वृद्धिः ३ ।**

**ॐ ज्यैष्ठ्यञ्चमऽआधिपत्यञ्चमेमन्युश्चमेभामश्चमेमश्चमेम्भश्चमेजेमाचमेमहिमाचमेवरिमाचमेप्रथिमाचमेवर्षिमाचमेद्राघिमाचमेवृद्धञ्चमे वृद्धिश्चमेयज्ञेनकल्पन्ताम् ॥**

*ॐ अद्येह पूर्वोक्तसङ्कल्पसिद्धिरस्तु अमुकगोत्रः, अमुकशर्माहं करिष्यमाणरुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः !* **ॐ कल्याणं भवन्तो ब्रुवन्तु** ३ । ब्राह्मणाः– **ॐ कल्याणम् ३**

**ॐ यथेमां वाचं कल्याणीमावदानि जनेभ्यः ॥ ब्रह्मराजन्याभ्याꣳ शूद्राय चार्य्याय च स्वाय चारणाय च ॥ प्रियोदेवानां दक्षिणायै दातुरिहभूयासमयम्मे कामः समृद्ध्यतामुपमादो नमतु ॥**

*ॐ अद्येह पूर्वोक्तसङ्कल्पसिद्धिरस्तु अमुकगोत्रः, अमुकशर्माहं करिष्यमाणरुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः !* **ॐ शान्तिं भवन्तो ब्रुवन्तु** ३ । ब्राह्मणाः– **ॐ शान्तिः ३ ।**

**ॐ द्यौः शान्तिरन्तरिक्षꣳशान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः ॥ व्वनस्प्पतयः शान्तिर्व्विश्श्वेदेवाः शान्तिर्ब्ब्रह्मशान्तिः सर्व्वꣳ शान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥**

ॐ अद्येह पूर्वोक्तसङ्कल्पसिद्धिरस्तु अमुकगोत्रः, अमुकशर्माहं करिष्यमाणरुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः ! **ॐ श्रियं भवन्तो ब्रुवन्तु ३।**
ब्राह्मणाः— **ॐ श्रीः ३।**

**ॐ मनसः काममाकूतिं वाचः सत्यमशीय।**
**पशूना ॐ रूपमन्नस्य रसो यशः श्रीः श्रयताम्॥**
**श्रीर्वर्चस्वमायुष्यमारोग्यमाभिधात् पवमानं महीयते।**
**धनं धान्यं पशुं बहुपुत्रलाभं शतसम्वत्सरं दीर्घमायुः॥**
**मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः।**
**शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयोऽस्तु वः॥**
**अव्याधिना शरीरेण मनसा च निराधिना।**
**पूरयन्नर्थिनामाशास्त्वं जीव शरदां शतम्॥**

इति पठन्तः पूगीफलादीनि यजमानाय समर्पयेयुः॥

**रक्षाबन्धनपूजा—**

ताम्रपात्रस्थां यवदूर्वासर्षपचन्दनगोमयदधिसहितां रक्षां स्पृशन्नारायणकवचं पठेत्—

**ॐ पूर्वे रक्षतु गोविन्द आग्नेय्यां धरणीधरः।**
**याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते॥**
**वारुण्यां केशवो रक्षेद् वायव्यां मधसूदनः।**
**उत्तरे श्रीधरो रक्षेदैशान्यां तु गदाधरः॥**
**ऊर्ध्वं गोवर्धनो रक्षेदधस्तात्तु महीधरः।**
**एवं दशदिशो रक्षेद्वासुदेवो जनार्दनः॥**

ॐ रक्षोहणम्बलगहनंवैष्णवीमिदमहन्तम्बलगमुत्किरामियम्मे निष्ट्योयममात्योनिचखानेदमहन्तम्बलगमुत्किरामियम्मेसमानोयमसमानोनिचखानेदमहन्तम्बलगमुत्किरामियम्मेसबन्धुर्यमसबन्धुर्निचखानेदमहन्तम्बलगमुत्किरामियम्मेसजातोयमसजातोनिचखानोत्कृत्याङ्किरामि॥ ॐ स्वराडसिसपत्नहासत्रराडस्यभिमातिहा॥ जनराडसिरक्षोहासर्वराडस्यमित्रहा॥ ॐ रक्षोहणोवोबलगहनः प्रोक्षामिवैष्णवान्रक्षोहणोवोबलगहनोवनयामिवैष्णवान्रक्षोहणोवोबलगहनोवस्तृणामिवैष्णवान्रक्षोहणौवाम्बलगहनाऽउपदधामिवैष्णवीरक्षोहणौवाम्बलगहनौपर्यूहामिव्वैष्णवीव्वैष्णवमसिव्वैष्णवाःस्थ॥ ॐ सप्तऽऋषयः प्रतिहिताः शरीरेसप्तरक्षन्तिसदमप्प्रमादम्॥ सप्तापः स्वपतो लोकमीयुस्तत्रजागृतोऽअस्वप्नजौसत्रसदौचदेवौ॥ ॐ त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः॥ रक्षातोकमुतत्मना॥

## चतुर्लिङ्गतोभद्रपूजा–

*अथ लिङ्गतोभद्रदेवतास्थापनपूजनक्रमः–*

मध्ये कर्णिकायां ॐ भूर्भुवः स्वः ब्रह्मणे नमः । ब्रह्माणमावाहयामि, स्थापयामि गन्धाक्षतपुष्पादियथालब्धोपचारैः पूजयामि । ब्रह्मन् पूजितोऽसि क्षमस्व । एवम्प्रकारेण अन्येषामपि देवानामावाहनं स्थापनं पूजनञ्च क्रमेण कुर्यात्–

**तद्बाह्ये पूर्वे–** ॐ भूर्भुवः स्वः असिताङ्गभैरवाय नमः । असिताङ्गभैरवमावाहयामि, स्थापयामि । **आग्नेये–** ॐ भूर्भुवः स्वः रुरुभैरवाय नमः । रुरुभैरवमावाहयामि पूजयामि । रुरुभैरव पूजितोऽसि क्षमस्व ॥ **दक्षिणे–** ॐ भूर्भुवः स्वः चण्डभैरवाय नमः । **नैर्ऋत्याम्–** ॐ भूर्भुवः स्वः क्रोधभैरवाय नमः । **पश्चिमे–** ॐ भूर्भुवः स्वः उन्मत्तभैरवाय नमः । **वायव्ये–** ॐ भूर्भुवः स्वः कपालभैरवाय नमः । **उत्तरे –** ॐ भूर्भुवः स्वः भीषणभैरवाय नमः । **ऐशान्याम्–** ॐ भूर्भुवः स्वः संहारभैरवाय नमः । **तद्बाह्ये पूर्वे–** ॐ भूर्भुवः स्वः भवाय नमः । **आग्नेये–** ॐ भूर्भुवः स्वः शर्वाय नमः । **दक्षिणे–** ॐ भूर्भुवः स्वः पशुपतये नमः । **नैर्ऋत्याम्–** ॐ भूर्भुवः स्वः ईशानाय नमः । **पश्चिमे–** ॐ भूर्भुवः स्वः रुद्राय नमः । **वायव्ये–** ॐ भूर्भुवः स्वः उग्राय नमः । **उत्तरे –** ॐ भूर्भुवः स्वः भीमाय नमः । **ऐशान्याम्–** ॐ भूर्भुवः स्वः महते नमः । **तद्बाह्ये पूर्वे–**ॐ भूर्भुवः स्वः अनन्ताय नमः । **आग्नेये–** ॐ भूर्भुवः स्वः वासुकये नमः । **दक्षिणे–** ॐ भूर्भुवः स्वः कुलिशाय नमः । **नैर्ऋत्याम्–**ॐ भूर्भुवः स्वः तक्षकाय नमः । **पश्चिमे–** ॐ भूर्भुवः स्वः कर्कोटकाय नमः । **वायव्ये–** ॐ भूर्भुवः स्वः शङ्खपालाय नमः । **उत्तरे –** ॐ भूर्भुवः स्वः कम्बलाय नमः । **ऐशान्याम्–** ॐ भूर्भुवः स्वः अश्वतराय नमः । **ईशानेन्द्रमध्ये–** ॐ भूर्भुवः स्वः शूलिने नमः । **इन्द्राग्निमध्ये–** ॐ भूर्भुवः स्वः चन्द्रमौलये नमः । **अग्नियमयोर्मध्ये–** ॐ भूर्भुवः स्वः चन्द्रमसे नमः । **यमनिर्ऋतिमध्ये–** ॐ भूर्भुवः स्वः वृषभध्वजाय नमः । **निर्ऋतिवरुणमध्ये–** ॐ भूर्भुवः स्वः त्रिलोचनाय नमः । **वरुणवायुमध्ये** ॐ भूर्भुवः स्वः शक्तिधराय नमः । **वायुसोमयोर्मध्ये –** ॐ भूर्भुवः स्वः महेश्वराय नमः । **सोमेशानयोर्मध्ये–** ॐ भूर्भुवः स्वः शूलपाणये नमः । शूलपणिमावाहयामि पूजयामि । शूलपाणे पूजितोऽसि क्षमस्व । एवम्प्रकारेण देवानावाह्य नाममन्त्रेण आसनादिनीराजनान्तं सम्पूज्य तदुपरि पीठिकायां शिवपूजनम् ।

## पार्षदपूजनम्–

*नन्दीश्वरपूजनम् (पश्चिमे)–*

ॐ आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरञ्च प्रयन्त्स्वः ॥

ॐ प्रैतुव्वाजीकनिक्रदन्नानदद्द्रासभः पत्वा ।

भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा ॥

वृषाग्निं वृषणं भरन्नपां गर्भꣳ समुद्रियम् ॥ अग्न आ याहि वीतये ॥

*वीरभद्रपूजनम् (दक्षिणे)–*

ॐ भद्द्रङ्कर्णेभिः शृणुयामदेवाभद्द्रम्पश्श्येमाक्षभिर्य्यजत्राः ॥

स्थिरैरङ्गैस्तुष्टुवा ꣳ सस्तनूभिर्व्यशेमहिदेवहितंय्यदायुः ॥

ॐ भद्रोनोऽअग्निराहूतोभद्रारातिः सुभगभद्रोऽअध्वरः ।

भद्राऽउतप्प्रशस्तयः ॥

*कार्तिकेयपूजनम् (आग्नेये)–*

ॐ यदक्रन्दःप्प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ।

श्यनेस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्वन् ॥

ॐ यत्रबाणाःसम्पतन्तिकुमाराविशिखाऽइव ॥

तन्नऽइन्द्रोबृहस्पतिरदितिः शर्म्मयच्छतुविश्वाहाशर्म्मयच्छतु ॥

*कुवेरपूजनम् (उत्तरे)–*

ॐ कुविदङ्गयवमन्तोयवञ्चिद्यथादान्त्यनुपूर्वंवियूय ।

इहेहैषाङ्कृणुहिभोजनानियेबर्हिषोनमऽउक्तिंयजन्ति ॥

ॐ वयꣳ सोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तः सचेमहि ॥

*कीर्तिमुखपूजनम् (दक्षिणाग्नेयमध्ये)–*

ॐ असवेस्वाहाव्वसवेस्वाहाव्विभुवेस्वाहाव्विवस्वतेस्वाहागणश्रिये स्वाहागणपतयेस्वाहाभिभुवेस्वाहाधिपतयेस्वाहाशूषायस्वाहास ꣳ सर्पाय स्वाहाचन्द्रायस्वाहाज्योतिषेस्वाहामलिम्लुचायस्वाहादिवापतयेस्वाहा ॥

ॐ ओजश्चमेसहश्चमऽआत्माचमेतनूश्चमेशर्म्मचमेवर्मचमेङ्गानिचमे स्थीनिचमेपरु ꣳ षिचमेशरीराणिचमऽआयुश्चमेजराचमे यज्ञेनकल्पताम् ॥

*सर्पपूजनम् (मध्ये)–*

ॐ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु । येऽअन्तरिक्षेयेदिवितेभ्यः सर्पेभ्यो नमः ॥



# अथ प्रधानदेवतापूजा

आदौ ध्यानम्—

**ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं**
**रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।**
**पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं**
**विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥**

(अत्र तत्तन्मन्त्रैः गणपत्यादिपञ्चायतनदेवानां ध्यानं कुर्यात्)

आवाहनम्—

**ॐ नमस्ते रुद्रमन्यवऽउतोत इषवे नमः । बाहुभ्यामुत ते नमः ॥**
**एह्येहि गौरीश पिनाकपाणे शशाङ्कमौले वृषभाधिरूढ ।**
**देवाधिदेवेश महेश नित्यं गृहाण पूजां भगवन्नमस्ते ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, आवाहयामि ।

आसनम्—

**ॐ या ते रुद्र शिवा तनूरघोरा पापकाशिनी ॥**
**तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥**
**रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं शुभम् ।**
**आसनं च मया दत्तं गृहाण परमेश्वर ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, आसनं समर्पयामि ।

पाद्यम्—

**ॐ यामिषुङ्गिरिशन्तहस्तेबिभर्ष्यस्तवे ॥**
**शिवाङ्गिरित्रताङ्कुरुमा हिंᳯसीः पुरुषञ्जगत् ॥**
**उष्णोदकं निर्मलञ्च सर्वसौगन्ध्यसंयुतम् ।**
**पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, पादयोः पाद्यं समर्पयामि ॥

अर्घ्यम्—

**ॐ शिवेनव्वचसात्त्वागिरिशाच्छाव्वदामसि ॥**
**यथानः सर्व्वमिज्जगदयक्ष्मᳯसुमनाऽअसत् ॥**

**अर्घ्यं गृहाण देवेश गन्धपुष्पाक्षतैर्युतम् ।**
**करुणाकर मे देव प्रसन्नो भव शङ्कर ॥**
*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, अर्घ्यं समर्पयामि ॥

आचमनीयम्–

**ॐ अद्ध्यवोचदधिवक्ताप्प्रथमोदैव्व्योभिषक् ॥**
**अहींश्चसर्व्वाञ्जम्भयन्त्सर्व्वांश्चयातुधान्न्योधराचीः परासुव ॥**
**सर्वतीर्थसमायुक्तं सुगन्धि विमलं जलम् ।**
**आचम्यतां मया दत्तं चन्द्रशेखर शङ्कर ॥**
*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, मुखे आचमनीयं समर्पयामि ॥

स्नानीयम्–

**असौयस्ताम्म्रोऽअरुणऽउतबब्भ्रुः सुमङ्गलः ॥**
**येचैनꣳरुद्द्राऽअभितोदिक्षुश्श्रिताः सहस्स्रशोवैषा ꣳ हेडऽईमहे ॥**
**गङ्गा–सरस्वती–रेवा–पयोष्णी–नर्मदाजलैः ।**
**स्नापितोऽसि मया देव ततः शान्तिं कुरुष्व मे ॥**
*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, स्नानीयं समर्पयामि ॥

**पञ्चामृतस्नानम्–**

*ततः पञ्चामृतस्नाने तत्रादौ ऊर्ध्ववक्त्रध्यानम्–*

**व्यक्ताव्यक्तगुणोत्तरं सुवदनं षड्विंशतत्त्वाधिकं**
**तस्मादुत्तर-तत्त्वमक्षयमिति ध्येयं सदा योगिभिः ।**
**वन्दे तामसवर्जितेन मनसा सूक्ष्मातिसूक्ष्मं परं**
**शान्तं पञ्चममीश्वरस्य वदनं खव्यापि तेजोमयम् ॥**

*क्षीरस्नानम्–*

ॐ आप्यायस्वेति गौतम ऋषिः पयोदेवता गायत्री छन्दः ऊर्ध्ववक्त्रे ईशानाय क्षीरस्नाने विनियोगः ।

**ॐ आप्यायस्वसमेतुतेव्विश्वतः सोमवृष्ण्यम् । भवाव्वाजस्यसङ्गथे ॥**
**गोक्षीरधाम देवेश गोक्षीरेण मया कृतम् ।**
**स्नपनं देवदेवेश गृहाण परमेश्वर ॥**
*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, पयःस्नानं समर्पयामि ॥

*शुद्धोदकस्नानम्–*

**ॐ आपोऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ॥**
**विश्वꣳ हिरिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूतऽएमि ॥**
**दीक्षातपसोस्तनूरसि तां त्वा शिवाꣳ शग्मां परिदधे भद्रं वर्णं पुष्यन् ॥**
ॐ भुर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः, शुद्धोदकस्नानं समर्पयामि ॥
**ॐ ईशानाय नमः** । इति मन्त्रेण गन्धपुष्पादिभिः पूजयेत् ।
एवमनेन प्रकारेण सर्वत्र पूजयेत् ।

*पूर्ववक्त्रध्यानम्–*

**संवर्ताग्नितडित्प्रतप्त-कनक-प्रस्पर्द्धि-तेजोऽरुणं**
**गम्भीरस्मृतिनिःसृतोग्रदशनप्रोद्भासिताम्राधरम् ।**
**बालेन्दु-द्युति-लोल-पिङ्गल-जटा-भार-प्रबद्धोरगं**
**वन्दे सिद्धसुरासुरेन्द्रनमितं पूर्वं मुखं शूलिनः ॥**

*दधिस्नानम्–*

**ॐ दधिक्राव्ण** इति वामदेवऋषिर्दधिदेवता अनुष्टुप्छन्दः पूर्ववक्त्रे तत्पुरुषाय दधिस्नाने विनियोगः ।

**ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ।**
**सुरभि नो मुखाकरत्प्रणऽआयूꣳषि तारिषत् ।**
**दध्ना चैव महादेव स्नपनं क्रियते मया ।**
**गृहाणैव मया दत्तं सुप्रसन्नो भवाद्य वै ॥**
*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, दधिस्नानं समर्पयामि ॥
**ॐ आपोऽअस्मान्** इति शुद्धोदकेन स्नापयित्वा **ॐ तत्पुरुषाय नमः**, इति गन्धादिभिः संपूज्य–

*पश्चिमवक्त्रध्यानम्–*

**प्रालेयामलमिन्दुकुन्दधवलं गोक्षीरफेनप्रभं**
**भस्माभ्यङ्गमनङ्गदेहदहनं ज्वालावलीलोचनम् ।**
**ब्रह्मेन्द्रादिमरुद्गणैः स्तुतिपरैरभ्यर्चितं योगिभि–**
**र्वन्देऽहं सकलं कलङ्करहितं स्थाणोर्मुखं पश्चिमम् ॥**

*घृतस्नानम्–*

**ॐ घृतं मिमिक्ष** इति गृत्समद ऋषिः घृतं देवता त्रिष्टुप्छन्दः पश्चिमवक्त्रे सद्योजाताय घृतस्नाने विनियोगः ।

**ॐ घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम।**
**अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥**
**सर्पिषा च महादेव स्नपनं क्रियते मया ।**
**गृहाण श्रद्धया दत्तं तव प्रीत्यर्थमेव च ॥**
*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, घृतस्नानं समर्पयामि ॥

**ॐ आपोऽअस्मान्** इति शुद्धोदकेन स्नापयित्वा **ॐ सद्योजाताय नमः** इति गन्धादिभिः पूजयेत्।

*दक्षिणवक्त्रध्यानम् –*

**कालाभ्रभ्रमराञ्जनाचलनिभं व्यावृत्तपिङ्गेक्षणं**
**खण्डेन्दुद्वयमिश्रितांशुदशनप्रोद्भिन्नदंष्ट्राङ्कुरम् ।**
**सर्पप्रोतकपालशुक्तिसकलव्याकीर्णसच्छेखरं**
**वन्दे दक्षिणमीश्वरस्य कुटिलं भ्रूभङ्गरौद्रं मुखम् ॥**

*मधुस्नानम्–*

**ॐ मधुवाता०** इति गौतम ऋषिः, मधुदेवता गायत्री छन्दः दक्षिणवक्त्रे अघोराय मधुस्नाने विनियोगः।

**ॐ मधुवाताऽऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः॥**
**ॐ मधु नक्तमुतोषसो मधुमत्पार्थिवँ रजः। मधु द्यौरस्तु नः पिता॥**
**ॐ मधुमान्नो वनस्पतिर्मधुमाँऽअस्तु सूर्यः। माध्वीर्गावो भवन्तु नः॥**
**तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु ।**
**तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥**
*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, मधुस्नानं समर्पयामि ॥

**ॐ आपोऽअस्मान्** इति शुद्धोदकेन स्नापयित्वा **ॐ अघोराय नमः**, इति गन्धादिभिः पूजयेत्।

*उत्तरवक्त्रध्यानम् –*

**गौरं कुङ्कुमपिङ्गलं सुतिलकं व्यापाण्डुगण्डस्थलं**
**भ्रूविक्षेपकटाक्षवीक्षणलसत्संशक्तकर्णोत्पलम् ।**
**स्निग्धं बिम्बफलाधरं प्रहसितं नीलालकालङ्कृतं**
**वन्दे पूर्णशशाङ्कमण्डलनिभं वक्त्रं हरस्योत्तरम् ॥**

*शर्करास्नानम् –*

**ॐ अपाꣳ** रसमित्यस्य इन्द्रबृहस्पतिर्ऋषिरनुष्टुप्छन्दः सदाशिवो देवता उत्तरवक्त्रे वामदेवाय शर्करास्नाने विनियोगः।

ॐ अपाᳪं रसमुद्वयसᳬसूर्ये सन्तᳬसमाहितम् ॥ अपाᳪं रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥

इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका ।
मलापहारिणी दिव्या स्नानाय प्रतिगृह्यताम् ॥

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, शर्करास्नानं समर्पयामि ॥

**ॐ आपोऽस्मान्** इति शुद्धोदकेन स्नापयित्वा ॐ **वामदेवाय नमः**, इति गन्धादिभिः पूजयेत् । ततः समग्ररूपेण पञ्चामृतस्नानं कुर्यात् ।

पञ्चामृतस्नानम्–

**ॐ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः ।**
**सरस्वती तु पञ्चधा सो देशेभवत्सरित् ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, पञ्चामृतस्नानं समर्पयामि ॥

**ॐ आपोऽस्मान्** इति पुनः शुद्धोदकेन स्नापयेत् ।

गन्धोदकस्नानम्–

**ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।**
**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**
**मलयाचलसम्भूतं चन्दनागरुवासितम् ।**
**सलिलं देवदेवेश स्नानार्थं प्रतिगृह्यताम् ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, गन्धोदकस्नानं समर्पयामि ।

**ॐ आपोऽस्मान्** इति शुद्धोदकेन स्नापयित्वा–

उद्वर्तनस्नानम्–

**ॐ अᳪंशुनाते अᳪंशुः पृच्यताम्परुषा परुः ।**
**गन्धस्ते सोममवतु मदाय रसोऽअच्युतः ॥**
**नानासुगन्धिद्रव्यं च चन्दनं रजनीयुतम् ।**
**उद्वर्तनं मया दत्तं गृहाण शशिशेखर ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, उद्वर्तनस्नानं समर्पयामि ॥

**ॐ आपोऽस्मान्** इति पुनः शुद्धोदकस्नानम् कुर्यात् ।

तत "**ॐ साम्बसदाशिवाय नमः**" इति नाममन्त्रेण गन्धाक्षतपुष्पबिल्वपत्र-धूपदीपनैवेद्यादिपूजोपचाराणि समर्प्य सङ्कल्पितावृत्तिभी रुद्राध्यायं पठन् साम्बसदाशिवोपरि जलधारया (दुग्धादिधारया वा) अभिषेकं कुर्यात् ।

# अथ षडङ्गन्यासः

हरिः ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञ ᳪ समिमन्दधातु । विश्श्वेदेवासऽइहमादयन्तामों३प्रतिष्ठ ॥

ॐ हृदयाय नमः ।

ॐ अबोद्ध्यग्ग्निः समिधाजनानाम्प्रतिधेनुमिवायतीमुषासम् । यह्वाऽइवप्प्रवयामुज्जिहानाः प्रभानवः सिस्त्रतेनाकुमच्छ ॥

ॐ शिरसे स्वाहा ।

ॐ मूर्द्धानन्दिवोऽअरतिम्पृथिव्याव्वैश्श्वानरमृतऽआजातमग्ग्निम् । कवि ᳪ सम्म्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥

ॐ शिखायै वषट् ।

ॐ मर्म्माणितेवर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् । उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥

ॐ कवचाय हुम् ।

ॐ विश्श्वतश्श्चक्षुरुतव्विश्श्वतोमुखोव्विश्श्वतोबाहुरुतव्विश्श्वतस्पात् । सम्बाहुब्भ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥

ॐ नेत्रत्रयाय वौषट् ।

ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्श्वेषुरीरिषः । मानोव्वीरान्रुद्द्रभामिनोव्वधीर्हविष्मन्तः सदमित्त्वाहवामहे ॥

ॐ अस्त्राय फट् ।

*॥ इति षडङ्गन्यासः ॥*

## ध्यानम्

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥

ॐ

॥ श्रीगणेशाय नमः ॥

# रुद्राष्टाध्यायी

## अथ प्रथमोऽध्यायः

हरिः ॐ गणानान्त्वागणपतिꣳ हवामहेप्प्रियाणान्त्वाप्प्रियपतिꣳ
हवामहेनिधीनान्त्वानिधिपतिꣳ हवामहेवसोमम॥
आहमजानिगर्ब्भधमात्वमजासिगर्ब्भधम्॥१॥
गायत्रीत्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्यासह॥
बृहत्त्युष्णिहाककुप्प्सूचीभिः शम्म्यन्तुत्वा॥२॥
द्विपदायाश्च्चतुष्प्पदास्त्रिपदायाश्च्चषट्पदाः॥
विच्छन्दायाश्च्चसच्छन्दाःसूचीभिःशम्म्यन्तुत्वा॥३॥

---

### *प्रथम अध्याय*

सबै गणलाई पालन गर्ने गणपतिरूप हजुरलाई हामी आवाहन गर्दछौं। यस्तै प्रियजनलाई कल्याण गर्ने प्रियपतिरूप हजुरलाई आवाहन गर्दछौं। सम्पूर्ण महापद्म आदि खानीहरूका मालिक निधिपतिरूप हजुरलाई हामी आवाहन गर्दछौं। हे परमधनरूप भगवन् हजुरले हाम्रो रक्षा गर्नुहोस्। हामी सामान्य गर्भबाट उत्पन्न हुने जीव हौं। हजुर स्वाधीन स्वयम्भू हुनुहुन्छ र हामीलाई आमाको गर्भबाट उत्पन्न गराउने पनि हजुर नै हुनुहुन्छ ॥१॥ हे भगवन्! गान गर्नेवालालाई रक्षा गर्ने गायत्री छन्द, तीनै तापलाई नष्ट गर्ने त्रिष्टुप् छन्द, जगत्मा व्याप्त जगती छन्द, संसारको दुःख निवारण गर्ने अनुष्टुप् छन्द, त्यस्तै पंक्ति छन्द र बृहती छन्द, प्रभातप्रियकारी उष्णिक् छन्द र ककुप् छन्द यी सबै छन्दहरूले युक्त सुन्दर वाणीद्वारा हजुरको स्तुति गर्दछौं ॥२॥ हे ईश्वर! दुई पाउ, चार पाउ, तीन पाउ, छ पाउ भएका विभिन्न छन्दका लक्षणले युक्त भएका र नभएका सबै छन्दवाला सुन्दर वाणीहरूद्वारा हामी हजुरको स्तुति गर्दछौं ॥३॥

सुहस्तोमाःसुहच्छन्दसऽआवृतः सुहप्प्रमाऽऋषयःसुप्तदैव्याः॥
पूर्वेषाम्पन्थामनुदृश्यधीराऽअन्वालेभिरेरत्थ्योनरश्मीन्॥४॥
यज्जाग्ग्रतोदूरमुदैतिदैवन्तदुसुप्तस्यतथैवेति।
दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मेमनःशिवसङ्कल्पमस्तु॥५॥
येनकर्म्माण्यपसोमनीषिणोयज्ञेकृण्वन्तिविदथेषुधीराः॥
यदपूर्व्वंय्यक्षमन्तःप्प्रजानान्तन्मेमनःशिवसङ्कल्पमस्तु॥६॥
यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरन्तरमृतम्प्रजासु॥
यस्मान्नऽऋतेकिञ्चनकर्म्मक्क्रियतेतन्मेमनःशिवसङ्कल्पमस्तु॥७॥

---

मरीचि आदि सप्त ऋषिहरूले स्तोम आदि साममन्त्रहरू र गायत्री आदि छन्दहरूको साथमा, उत्तम कर्म गरेर र श्रुतिप्रमाणका साथ आफ्ना अङ्गिरा आदि पूर्वजहरूको मार्गलाई अनुसरण गर्दै धीर र शान्त चित्त भएका व्यक्तिहरूले आरम्भ गरेको यज्ञकर्म त्यसरी सम्पन्न गरे जसरी लगामको सहाराले सारथिले रथलाई आफ्नो उद्देश्य बमोजिम लैजान सफल हुन्छ॥४॥

*शिवसङ्कल्पसूक्त–*

जुन जाग्रत् अवस्थामा रहेका मनुष्यको मन त्यहाँबाट टाढासम्म पुग्ने गर्दछ। त्यही मन सुषुप्ति अवस्थामा रहेका मनुष्यका नजिकै आएर लीन हुन्छ। जो टाढासम्म पुग्छ र प्रकाशमान श्रोत्र आदि इन्द्रियहरूलाई पनि प्रकाश दिन्छ त्यो मेरो मन कल्याणकारी र शुभसङ्कल्पवाला बनोस्॥५॥ कर्मानुष्ठानमा लागेका बुद्धिमान् मेधावी पुरुषहरूले जुन मनद्वारा यज्ञमा शुभकर्महरू गर्ने गर्दछन्। जुन मन प्रजाहरूको शरीरमा र यज्ञीय पदार्थहरूको ज्ञानमा अतुलनीय एवं पूज्य भावले रहन्छ त्यो मेरो मन कल्याणकारी र शुभसङ्कल्पवाला बनोस्॥६॥ जुन मन उत्कृष्ट ज्ञानस्वरूप, चित्तस्वरूप र धृतिस्वरूप छ। जुन अविनाशी मन प्राणीहरूको भित्र ज्योतिरूपमा रहेको छ र जसको सहाराविना कुनै कर्म गर्न सकिँदैन। त्यस्तो त्यो मेरो मन कल्याणकारी र शुभसङ्कल्पवाला बनोस्॥७॥

येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेनसर्व्वम् ॥
येनयज्ञस्तायतेसप्तहोतातन्मेमनःशिवसङ्कल्पमस्तु ॥८॥
यस्मिन्नृचःसामयजूꣳषियस्मिन्प्रतिष्ठितारथनाभाविवाराः ॥
यस्मिँश्चित्तꣳसर्व्वमोतम्प्रजानान्तन्मेमनःशिवसङ्कल्पमस्तु ॥९॥
सुषारथिरश्वानिवयन्मनुष्यान्नेनीयतेभीशुभिर्व्वाजिनऽइव ॥
हृत्प्रतिष्ठंयदजिरञ्जविष्ठन्तन्मेमनःशिवसङ्कल्पमस्तु ॥१०॥

*॥ ॐ हृदयाय नमः ॥*

*॥ इति प्रथमोऽध्यायः ॥*

---

जुन मनद्वारा भूत, वर्तमान र भविष्यत्कालका सम्पूर्ण वस्तुहरू पूरै प्रकाशित हुन्छन् र जुन मनद्वारा सप्तहोतावाला यज्ञ विस्तृत गरिन्छ । त्यो मेरो मन कल्याणकारी र शुभसङ्कल्पवाला हओस् ॥८॥ जुन मनमा ऋग्वेदका ऋचाहरू, सामवेदका गानहरू र यजुर्वेदका मन्त्रहरू रथचक्रको नाभिमा अराझैं जुटेर रहेका छन् तथा जुन मनमा सम्पूर्ण जनताको ज्ञान ओतप्रोत भएर रहेको छ त्यो मेरो मन कल्याणकारी र शुभसङ्कल्पवाला बनोस् ॥९॥ असल सारथिले लगामद्वारा वेगवान् घोडालाई घुमाएझैं जुन मनले मनुष्यहरूलाई आफ्नो इच्छाअनुसार घुमाउने गर्दछ र जुन मन बाल्य, यौवन र वार्धक्य आदि अवस्थाद्वारा रहित भई हृदयमा रहन्छ त्यो मेरो वेगवान् मन कल्याणकारी र शुभसङ्कल्पवाला बनोस् ॥१०॥

*॥ प्रथम अध्याय समाप्त ॥*

# अथ द्वितीयोऽध्यायः

हरिः ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात्॥
सभूमिꣳ सर्वतस्पृत्त्वात्त्यतिष्ठद्दशाङ्गुलम्॥ १ ॥
पुरुषऽएवेदꣳ सर्वंय्यद्भूतंय्यच्च भाव्यम्॥
उतामृतत्त्वस्येशानोयदन्नेनातिरोहति॥ २ ॥
एतावानस्यमहिमातोज्ज्यायाँश्च्चपूरुषः॥
पादोस्यविश्श्वाभूतानित्रिपादस्यामृतन्दिवि॥ ३ ॥
त्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः॥
ततोविष्ष्वङ्व्यक्क्रामत्साशनानशनेऽअभि॥ ४ ॥

## द्वितीय अध्याय

*शिवसङ्कल्पसूक्त–*

सबै लोकमा व्याप्त हुनाले हजारौं शिरवाला, हजारौं नेत्रवाला र हजारौं चरणवाला जुन परमात्मा हुनुहुन्छ वहाँले पाँच तत्त्वबाट बनेको यो समष्टि र व्यष्टिरूप ब्रह्माण्डलाई सबैतिरबाट व्याप्त गर्दै नाभिदेखि दश औंला परिमित ठाउँलाई अतिक्रमण गरेर रहनुभएको छ र अन्तर्यामीको रूपमा हृदयमा विराजमान हुनुहुन्छ ॥१॥ जुन यो जगत् वर्तमानकालमा छ, अतीतमा थियो र भविष्यमा हुनेवाला छ। जो जगत्को बीजको रूपमा अथवा अन्नको परिणामभूत वीर्यद्वारा नर, पशु, वृक्ष आदिको रूपमा प्रकट हुने गर्दछ त्यो सबै उही अमृतरूप परमात्माको नै विस्तार हो ॥२॥ सर्वश्रेष्ठ भएका परमात्माको महिमा यति धेरै छ कि सम्पूर्ण भूत, भविष्यत् र वर्तमान सबै उनैको महिमाको एक अंश हो। विराट परमात्मा त यो संसारदेखि धेरै महान् हुनुहुन्छ। यो सम्पूर्ण जगत् उहाँको एक चौथाई मात्र हो। बाँकी तीन चौथाई उहाँको अमृतमय प्रकाशमान स्वरूपमा द्युलोकमा अवस्थित छ ॥३॥ यी महानारायण पुरुष आफ्ना तीनपाउ सहित ब्रह्माण्डदेखि माथि त्यस दिव्यलोकमा रहनुहुन्छ र उहाँले आफ्नो एक चौथाई अंशबाट यो संसारलाई ढाक्नु भएको छ। यही चरणका माध्यमले मायालाई स्वीकार गरी देवता, मनुष्य, पशुपक्षी आदिको रूप धारण गर्दै सर्वत्र व्याप्त हुनुहुन्छ ॥४॥

बिल्वपत्राणि—

**ॐ शिवोभवप्रजाभ्योमानुषीभ्यस्त्वमङ्गिरः ।**
**माद्यावापृथिवीऽअभिशोचीर्म्मान्तरिक्षम्मा वनस्पतीन् ॥**
**ॐ त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रिधायुधम् ।**
**त्रिजन्मपापसंहारमेकबिल्वं शिवार्पणम् ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः,* बिल्वपत्राणि समर्पयामि ॥
*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः,* दूर्वाङ्कुरान् समर्पयामि ॥
*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः,* पुष्पमालां समर्पयामि ॥

धूपः—

**ॐ यातेहेतिर्म्मीढुष्ट्टमहस्तेबभूवतेधनुः ।**
**तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुज ॥**
**ॐ वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।**
**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः,* धूपमाघ्रापयामि ॥

दीपः—

**ॐ परितेधन्वनोहेतिरस्मान्व्वृणक्तुव्विश्वतः ।**
**अथोयऽइषुधिस्तवारेऽअस्मन्निधेहितम् ॥**
**ॐ आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।**
**दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः,* दीपं प्रदर्शयामि ॥

नैवेद्यम्—

नैवेद्यं पुरतो निधाय बिल्वपत्रेणाच्छाद्य गायत्र्या जलेन सम्प्रोक्ष्य धेनुमुद्रयाऽमृतीकृत्य ग्रास-मुद्राः(पञ्चानामेवाङ्गुलीनामेकत्रीकरणम्, भोजने यथा क्रियते) प्रदर्श्य नैवेद्यं निवेदयेत् । **ॐ प्राणाय स्वाहा, ॐ अपानाय स्वाहा, ॐ व्यानाय स्वाहा, ॐ समानाय स्वाहा, ॐ उदानाय स्वाहा ।**

**ॐ अवतत्त्यधनुष्ट्वङ्सहस्राक्षशतेषुधे ॥**
**निशीर्य्यशल्ल्यानाम्मुखाशिवोनः सुमनाभव ॥**

**ॐ सर्कराघृतसंयुक्तं मधुरं स्वादु चोत्तमम् ।**
**उपहारः समानीतो नैवेद्यं प्रतिगृह्यताम् ॥**
*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, विविधपरिकारयुतं नैवेद्यं निवेदयामि। ततः **ॐ नमः शिवाय** इति यथाशक्ति जपं विधाय तालीत्रयं कृत्वा, मध्ये मध्ये जलमुत्तरापोशानं हस्तप्रक्षालनार्थे, मुखप्रक्षालनार्थे च जलं समर्पयामि।

आचमनीयम्–

**ॐ एलोशीरलवङ्गादिकर्पूरादिसुवासितम् ।**
**प्राशनायाऽऽहृतं तोयं गृहाण परमेश्वर ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, आचमनीयं समर्पयामि॥

करोद्वर्तनम्–

**ॐ अꣳशुनातेऽअꣳशुः पृच्यताम्परुषापरुः ।**
**गन्धस्तेसोममवतु मदाय रसोऽअच्युतः ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, करोद्वर्तनार्थे चन्दनं समर्पयामि॥

ऋतुफलम्–

**ॐ याः फलिनीर्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥**
**बृहस्पतिप्प्रसूतास्तानोमुञ्चन्त्वꣳहसः ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, ऋतुफलं समर्पयामि॥

ताम्बूलम्–

**ॐ नमस्तऽआयुधायानाततायधृष्णवे ।**
**उभाब्भ्यामुततेनमो बाहुब्भ्यान्तवधन्न्वने ॥**
**ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।**
**एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, ताम्बूलं समर्पयामि॥

दक्षिणा–

**ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ॥**
**स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥**
**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।**
**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

*ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः*, कृतायाः पूजायाः साद्गुण्यार्थे दक्षिणाद्रव्यं समर्पयामि॥

# विशेषपूजा

## आवरणपूजा–

ॐ अघोराय नमः । ॐ पशुपतये नमः । ॐ शिवाय नमः । ॐ विरूपाय नमः । ॐ विश्वरूपाय नमः । ॐ भैरवाय नमः । ॐ त्र्यम्बकाय नमः । ॐ शूलपाणये नमः । ॐ कपर्दिने नमः । ॐ ईशानाय नमः । ॐ महेशाय नमः । ॐ भगवत्यै नमः । ॐ उमादेव्यै नमः । ॐ शङ्करप्रियायै नमः । ॐ पार्वत्यै नमः । ॐ गौर्यै नमः । ॐ कालिन्द्यै नमः । ॐ कोटिदेव्यै नमः । ॐ विश्वधारिण्यै नमः । ॐ विश्वेश्वर्यै नमः । ॐ शिवायै नमः । ॐ विश्वमात्रे नमः ।

## अङ्गपूजा–

ॐ ईशानाय नमः, पादौ पूजयामि । ॐ शङ्कराय नमः, जङ्घे पूजयामि । ॐ शिवाय नमः, जानुनी पूजयामि । ॐ शूलपाणये नमः, गुल्फौ पूजयामि । ॐ शम्भवे नमः कटिं पूजयामि । ॐ स्वयम्भुवे नमः, गुह्यं पूजयामि । ॐ महादेवाय नमः, नाभिं पूजयामि । ॐ विश्वकर्त्रे नमः, उदरं पूजयामि । ॐ सर्वतोमुखाय नमः,पार्श्वे पूजयामि । ॐ स्थाणवे नमः, स्तनौ पूजयामि । ॐ नीलकण्ठाय नमः, कण्ठं पूजयामि । ॐ शिवात्मने नमः, मुखं पूजयामि । ॐ त्रिनेत्राय नमः, नेत्रे पूजयामि । ॐ नागभूषणाय नमः, शिरः पूजयामि । ॐ देवाधिदेवाय नमः, सर्वाङ्गं पूजयामि ।

## गणपूजा–

ॐ गणपतये नमः । ॐ कार्तिकेयाय नमः । ॐ पुष्पदन्ताय नमः । ॐ कपर्दिने नमः । ॐ भैरवाय नमः । ॐ शूलपाणये नमः । ॐ ईश्वराय नमः । ॐ दण्डपाणये नमः । ॐ नन्दिने नमः । ॐ महाकालाय नमः ।

## अष्टमूर्तिपूजा–

ॐ शर्वाय क्षितिमूर्तये नमः । ॐ भवाय जलमूर्तये नमः । ॐ रुद्राय अग्निमूर्तये नमः । ॐ उग्राय वायुमूर्तये नमः । ॐ भीमाय आकाशमूर्तये नमः । ॐ पशुपतये यजमानमूर्तये नमः । ॐ महादेवाय सोममूर्तये नमः । ॐ ईशानाय सूर्यमूर्तये नमः ।

**अष्टोत्तरशतनामपूजनम् (शाक्तप्रमोदानुसारम्)—**

ॐ शिवाय नमः। ॐ महेश्वराय नमः। ॐ शम्भवे नमः। ॐ पिनाकिने नमः। ॐ शशिशेखराय नमः। ॐ वामदेवाय नमः। ॐ विरूपाक्षाय नमः। ॐ कपर्दिने नमः। ॐ नीललोहिताय नमः। ॐ शङ्कराय नमः। ॐ शूलपाणये नमः। ॐ खट्वाङ्गिने नमः। ॐ विष्णुवल्लभाय नमः। ॐ शिपिविष्टाय नमः। ॐ अम्बिकानाथाय नमः। ॐ श्रीकण्ठाय नमः। ॐ भक्तवत्सलाय नमः। ॐ भवाय नमः। ॐ सर्वाय नमः। ॐ त्रिलोकेशाय नमः। ॐ शितिकण्ठाय नमः। ॐ शिवाप्रियाय नमः। ॐ उग्राय नमः। ॐ कपालिने नमः। ॐ कामारये नमः। ॐ अन्धकासुरसूदनाय नमः। ॐ गङ्गाधराय नमः। ॐ ललाटाक्षाय नमः। ॐ कालकालाय नमः। ॐ कृपानिधये नमः। ॐ भीमाय नमः। ॐ परशुहस्ताय नमः। ॐ मृगपाणये नमः। ॐ जटाधराय नमः। ॐ कैलाशवासिने नमः। ॐ कवचिने नमः। ॐ कठोराय नमः। ॐ त्रिपुरान्तकाय नमः। ॐ वृषाङ्काय नमः ॐ वृषभारूढाय नमः। ॐ भस्मोद्धूलितविग्रहाय नमः। ॐ सामप्रियाय नमः। ॐ स्वरमयाय नमः। ॐ त्रयीमूर्तये नमः। ॐ अनीश्वराय नमः। ॐ सर्वज्ञाय नमः। ॐ परमात्मने नमः। ॐ सोमलोचनाय नमः। ॐ सूर्यलोचनाय नमः। ॐ अग्निलोचनाय नमः। ॐ हविर्यज्ञमयाय नमः। ॐ सोमाय नमः। ॐ पञ्चवक्त्राय नमः। ॐ सदाशिवाय नमः। ॐ विश्वेश्वराय नमः। ॐ वीरभद्राय नमः। ॐ गणनाथाय नमः। ॐ प्रजापतये नमः। ॐ हिरण्यरेतसे नमः। ॐ दुर्धर्षाय नमः। ॐ गिरीशाय नमः। ॐ गिरिशाय नमः। ॐअनघाय नमः। ॐ भुजङ्गभूषणाय नमः। ॐ भर्गाय नमः। ॐ गिरिधन्वने नमः। ॐ गिरिप्रियाय नमः। ॐ कृत्तिवाससे नमः। ॐ पुरारातये नमः। ॐ भगवते नमः। ॐ प्रमथाधिपाय नमः। ॐ मृत्युञ्जयाय नमः। ॐ सूक्ष्मतनवे नमः। ॐ जगद्व्यापिने नमः। ॐ जगद्गुरवे नमः। ॐ व्योमकेशाय नमः। ॐ महासेनजनकाय नमः। ॐ चारुविक्रमाय नमः। ॐ रुद्राय नमः। ॐ भूतपतये नमः। ॐ स्थाणवे नमः। ॐ अहिर्बुध्न्याय नमः। ॐ दिगम्बराय नमः। ॐ अष्टमूर्तये नमः। ॐ अनेकात्मने नमः। ॐ सात्त्विकाय नमः। ॐ शुद्धविग्रहाय नमः।

ॐ शाश्वताय नमः । ॐ खण्डपरशवे नमः । ॐ अजपाशविमोचकाय नमः । ॐ मृडाय नमः । ॐ पशुपतये नमः । ॐ देवाय नमः । ॐ महादेवाय नमः । ॐ अव्ययाय नमः । ॐ प्रभवे नमः । ॐ पूषदन्तभिदे नमः । ॐ अव्यग्राय नमः । ॐ दक्षाध्वरहराय नमः । ॐ हराय नमः । ॐ भगनेत्रभिदे नमः । ॐ अव्यक्ताय नमः । ॐ सहस्राक्षाय नमः । ॐ सहस्रपदे नमः । ॐ अपवर्गप्रदाय नमः । ॐ अनन्ताय नमः । ॐ तारकाय नमः । ॐ परमेश्वराय नमः ।

**षडक्षरशिवमन्त्रः–**

ॐ अस्य श्रीषडक्षरशिवमन्त्रस्य वामदेव ऋषिः पङ्क्तिच्छन्दः सदाशिवो देवता पुरुषार्थचतुष्टयसिद्ध्यर्थं जपे विनियोगः–

ॐ वामदेवाय ऋषये नमः, शिरसि । ॐ पङ्क्तिच्छन्दसे नमो मुखे । ॐ सदाशिवाय देवतायै नमः, हृदये । चतुर्विधपुरुषार्थसिद्ध्यर्थं जपे विनियोगः इति कृताञ्जलिर्वदेत् ॥ **ॐ** हृदयाय नमः । **न** शिरसे स्वाहा । **मः** शिखायै वषट् । **शि** कवचाय हुम् । **वा** नेत्रत्रयाय वौषट् । **य** अस्त्राय फट् । ततः स्तोत्रं पठेत्–

## शिवषडक्षरस्तोत्रम्–

**ओङ्कारं विन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः ।**
**कामदं मोक्षदं चैव ओङ्काराय नमो नमः ॥**
**न जातिर्न मृतिर्यस्य क्षयो यस्य न विद्यते ।**
**नमन्ति देवताः सर्वा नकारन्तन्नमाम्यहम् ॥**
**महादेवं महावक्रं महाध्यानपरायणम् ।**
**महापापहरं देवं मकारन्तन्नमाम्यहम् ॥**
**शिवात्परतरो नास्ति शिवशास्त्रेषु निश्चयः ।**
**शाम्यन्ति सर्वपापानि शकारन्तन्नमाम्यहम् ॥**
**वाहनं वृषभो यस्य वासुकिः कण्ठभूषणम् ।**
**वामे शक्तिधरं देवं वकारन्तन्नमाम्यहम् ॥**
**यत्र यत्र स्थितो देवः सर्वव्यापी महेश्वरः ।**
**यो गुरुः सर्वदेवानां यकारन्तन्नमाम्यहम् ॥**
**इदं षडक्षरस्तोत्रं प्रातरुत्थाय यः पठेत् ।**
**मुच्यते सर्वपापेभ्यः शिवलोकं स गच्छति ॥**

*॥ इति शिवषडक्षरस्तोत्रम् ॥*

नीराजनम्–

**ॐ आरात्रि पार्थिवꣳरजः पितुरप्प्रायिधामभिः ।**
**दिवः सदाꣳसिबृहती वितिष्ठसऽआत्वेषं वर्तते तमः ॥**
**ॐ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।**
**त्वमेव सर्वज्योतींषि तेन नीराजयाम्यहम् ॥**

ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः, नीराजनं समर्पयामि ॥

कर्पूरारार्तिक्यम्–

**ॐ इदꣳहविः प्रजननम्मेऽअस्तुदशव्वीरꣳसर्वगणꣳस्वस्तये ॥**
**आत्क्मसनिप्प्रजासनिपशुसनिलोकसन्यभयसनि ।**
**अग्निःप्प्रजाम्बहुलाम्मेकरोत्वन्नम्पयोरेतोऽअस्मासुधत्त ॥**
**ॐ कदलीगर्भसम्भूतं घनसारं मनोहरम् ।**
**आरार्तिक्यमहं कुर्वे पश्य मे वरदो भव ॥**

ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः, आरार्तिक्यं समर्पयामि ॥

प्रदक्षिणा–

**ॐ मानोमहान्तमुतमानोऽअर्ब्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् ॥**
**मानोव्वधीः पितरम्मोतमातरम्मानः प्प्रियास्तन्नोरुद्द्रीरिषः ॥**
**ॐ यानि कानि च पापानि जन्मान्तरकृतानि च ।**
**तानि सर्वाणि नश्यन्तु प्रदक्षिणं पदे पदे ॥**

ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः, प्रदक्षिणां समर्पयामि ॥

पुष्पाञ्जलि–

**ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्श्वेषुरीरिषः ॥**
**मानोव्वीरान्नुद्द्रभामिनोव्वधीर्हविष्मन्तः सदमित्त्वाहवामहे ॥**
**ॐ नानासुगन्धिपुष्पाणि देशकालोद्भवानि च ।**
**पुष्पाञ्जलिं मया दत्तं गृहाण परमेश्वर ॥**

ॐ भूर्भुवः स्वः श्रीसाम्बसदाशिवाय नमः, पुष्पाञ्जलिं समर्पयामि ॥

ततो यथावसरं अग्निस्थापनानन्तरं रुद्राभिषेकसङ्ख्यया दशांशेन शतांशेन वा शतरुद्रीयमन्त्रैः मूलमन्त्रेण वा यथाविधि हवनतर्पणमार्जनादिकर्म सम्पाद्य-

**पुष्पोदकेन तर्पणम्–**

ॐ भवं देवं तर्प्पयामि। ॐ शर्वं देवं तर्प्पयामि। ॐ ईशानं देवं तर्प्पयामि। ॐ पशुपतिं देवं तर्प्पयामि। ॐ रुद्रं देवं तर्प्पयामि। ॐ भीमं देवं तर्प्पयामि। ॐ महान्तं देवं तर्प्पयामि। ॐ देवदेवं तर्प्पयामि। इति तर्पयित्वा पूजयेत्–

ॐ ज्येष्ठाय नमः, आचमनीयं समर्पयामि। ॐ श्रेष्ठाय नमः, मधुपर्कं समर्पयामि। ॐ कालाय नमः गन्धं समर्पयामि। ॐ कलविकरणाय नमः, पुष्पाणि समर्पयामि। ॐ सर्वभूतदमनाय नमः धूममाघ्रापयामि। ॐ मनोन्मनाय नमः दीपं दर्शयामि। ॐ भवोद्भवाय नमः, नैवेद्यं समर्पयामि।

**अथाष्टौ पुष्पाञ्जलयः–**

ॐ भवाय देवाय नमः। ॐ शर्वाय देवाय नमः। ॐ ईशानाय देवाय नमः। ॐ पशुपतये देवाय नमः। ॐ रुद्राय देवाय नमः। ॐ उग्राय देवाय नमः। ॐ भीमाय देवाय नमः। ॐ महते देवाय नमः। ॐ भवस्य देवस्य पत्न्यै नमः। ॐ शर्वस्य देवस्य पत्न्यै नमः। ॐ ईशानस्य देवस्य पत्न्यै नमः। ॐ पशुपतेर्देवस्य पत्न्यै नमः। ॐ रुद्रस्य देवस्य पत्न्यै नमः। ॐ उग्रस्य देवस्य पत्न्यै नमः। ॐ भीमस्य देवस्य पत्न्यै नमः। ॐ महतो देवस्य पत्न्यै नमः।

**ॐ अघोरेभ्योथघोरेभ्यो घोरघोरतरेभ्यः।**
**सर्वेभ्यः सर्वसर्वेभ्यो नमस्तेऽअस्तु रुद्ररूपेभ्यः॥**
**ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि॥ तन्नो रुद्रः प्रचोदयात्॥**

*ततः सपरिजनः विशेषारार्तिक्यं कुर्यात्–*

## शिवारार्तिक्यम्–

**ॐ जय शिव शङ्कर शम्भो, जय गिरिजाधीश, शिव०।**
**जय जय करुणासागर–२ पशुपति जगदीश, ॐ हर हर हर॥**
**गिरि कैलाश निवास छ, गण छन् सहचारी, शिव०।**
**मुण्डमाला छ गलामा–२ रूप छ भयहारी, ॐ हर हर हर॥**
**डमरु त्रिशूल सुशोभित, प्रभुका दुई करमा, शिव०।**
**भूषण नाग विराजित–२ बाघाम्बर तनमा, ॐ हर हर हर॥**
**तीन नयनमा थरि थरि, ज्योति छ दिव्य सदा, शिव०।**
**वाहन वृषभ मनोहर–२ संगमा छन् गिरिजा, ॐ हर हर हर॥**

भस्म विलेपन सुन्दर, शिरमा चन्द्रकला, शिव० ।
कल कल बग्छिन् हर्दम–२ गङ्गा पुण्यजला, ॐ हर हर हर ॥
ब्रह्मा विष्णु महेश्वर, प्रभुका रूप सबै, शिव० ।
सृष्टि स्थिति लय सब हुन्–२ शिवलीला प्रभुकै, ॐ हर हर हर ॥
वेद पुराण थकित छन्, प्रभुको वर्णनमा, शिव० ।
कण कण व्यापक प्रभुको–२ महिमा त्रिभुवनमा, ॐ हर हर हर ॥
सुर, नर, मुनि सब प्रभुकै, निशिदिन ध्यान गरी, शिव० ।
परमानन्द मगन भै–२ जान्छन् पार तरी, ॐ हर हर हर ॥
सच्चिदानन्द परात्पर, सज्जन-हितकारी, शिव० ।
जय जय साम्बसदाशिव–२ जय जय त्रिपुरारि, ॐ हर हर हर ॥

## जगदीशारार्तिक्यम्

ॐ जय जगदीश हरे, प्रभु जय जगदीश हरे ।
प्रभुका चरण उपासक, कति कति पार तरे ॥ॐ जय० ।
मनको थाल मनोहर, प्रेमरूप वाती ।
भाव कपूर छ मङ्गल, आरती सब भाँती ॥ॐ जय० ।
नित्य निरञ्जन निर्मल, कारण अविनाशी ।
शरणागत प्रतिपालक, चिन्मय सुखराशि ॥ॐ जय० ।
सृष्टि स्थिति लय कर्ता, त्रिभुवनका स्वामी ।
भक्ति सुधा बर्साऊ, शरण पर्‍यौँ हामी ॥ॐ जय० ।
आसुर भाव निवारक, तारक सुखदाता ।
गुण अनुरूप तिमी हौ, हरिहर औ धाता ॥ॐ जय० ।
युग युग पालन गर्छौ, अगणित रूप धरी ।
लीलामय रस विग्रह, करुणामूर्ति हरि ॥ॐ जय० ।
समता शान्ति प्रदायक, सज्जन हितकारी ।
चरण शरण अब पायौं, प्रभु भव भयहारी ॥ॐ जय० ।
भाव सुनिर्मल देऊ, साधक फलदायी ।
जीवन धन्य बनोस् प्रभु, पदसेवा पाई ॥ॐ जय० ।
संयम सुरसरिताको, अविरल धार बहोस् ।
जति जति जन्म भएपनि, प्रभुमा प्रेम रहोस् ॥ॐ जय० ।

प्रेम सहित शुभ आरति, जसले नित्य गऱ्यो ।
दिन दिन निर्मल बन्दै, त्यो भवसिन्धु तऱ्यो ॥ॐ जय० ।
कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् ।
सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥
जलेन शीतलीकरणं पुष्पाभ्यां देवताभिवन्दनं हस्ताभ्यामात्माभिवन्दनं कृत्वा-
ॐ तनूपाऽअग्नेसि तन्वम्मे पाह्यायुर्दाऽअग्नेस्यायुर्म्मे देहि व्वर्चोदाऽअग्नेसि वर्चोमेदेहि । अग्नेयन्मेतन्वाऽऊनन्तन्मऽआपृण ॥
ॐ द्यौ शान्ति०, ॐ तच्चक्षुरिति मन्त्राभ्यां जलाभिषेकं कुर्यात् ।

## पुष्पाञ्जलिः

ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्प्रथमान्यासन् ॥
तेहनाकम्मिहमानः सचन्तयत्रपूर्व्वेसाद्ध्याः सन्तिदेवाः ॥१ ॥
राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे ।
स मे कामान्कामकामाय मह्यं कामेश्वरो वैश्रवणो दधातु ॥
ॐ कुबेराय वैश्रवणाय महाराजाय नमः ॥
ॐ व्विश्वतश्च्चक्षुरुतव्विश्वतोमुखोव्विश्वतोबाहुरुतव्विश्वतस्पात् ॥
सम्बाहुब्भ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥२ ॥
विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय ।
नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥
नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चिनारायणशङ्करात्मने ॥
देवि प्रपन्नार्तिहरे प्रसीद प्रसीद मातर्जगतोऽखिलस्य ।
प्रसीद विश्वेश्वरि पाहि नित्यं त्वमीश्वरि देवि चराचरस्य ॥
सशङ्खचक्रं सकिरीटकुण्डलं सपीतवस्त्रं सरसीरुहेक्षणम् ।
सहारवक्षःस्थलकौस्तुभश्रियं नमामि विष्णुं शिरसा चतुर्भुजम् ॥
वन्दे देवमुमापतिं सुरगुरुं वन्दे जगत्कारणम्
वन्दे पन्नगभूषणं मृगपतिं वन्दे पशूनाम्पतिम् ।
वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियम्
वन्दे भक्तजनाश्रयञ्च वरदं वन्दे शिवं शङ्करम् ॥

रत्नैः कल्पितमासनं हिमजलैः स्नानञ्च दिव्याम्बरं
नानारत्नविभूषितं मृगमदामोदाङ्कितं चन्दनम् ।
जातीचम्पकबिल्वपत्ररचितं पुष्पञ्च धूपन्तथा
दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम् ॥

सौवर्णे नवरत्नखण्डरचिते पात्रे घृतं पायसम्
भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं पानकम् ।
शाकानामयुतं जलं रुचिकरं कर्पूरखण्डोज्ज्वलं
ताम्बूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु ॥

छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं
वीणाभेरीमृदङ्गकाहलकला गीतं च नृत्यं तथा ।
साष्टाङ्गं प्रणतिः स्तुतिर्बहुविधा ह्येतत् समस्तं मया
सङ्कल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो ॥

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः ।
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो
यद्यत्कर्म करोमि तत्तदखिलं शम्भो तवाराधनम् ॥

करचरणकृतं वाक्कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वाऽपराधम् ।
विहितमविहितं वा सर्वमेतत्क्षमस्व
जय जय करुणाब्धे श्रीमहादेव शम्भो ॥

चन्द्रोद्भासितशेखरे स्मरहरे गङ्गाधरे शङ्करे
सर्पैर्भूषितकण्ठकर्णविवरे नेत्रोत्थवैश्वानरे ।
दन्तित्वक्कृतसुन्दराम्बरधरे त्रैलोक्यसारे हरे
मोक्षार्थं कुरु चित्तवृत्तिमचलामन्यैस्तु किं कर्मभिः ॥

किं वानेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं
किं वा पुत्रकलत्रमित्रपशुभिर्देहेनगेहेन किम् ।
ज्ञात्वैतत् क्षणभङ्गुरं सपदि रे त्याज्यं मनो दूरतः
स्वात्मार्थं गुरुवाक्यतो भज भज श्रीपार्वतीवल्लभम् ॥

आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं
प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ।
लक्ष्मीस्तोयतरङ्गभङ्गचपला विद्युच्चलं जीवितं
तस्मान्मां शरणागतं शरणद ! त्वं रक्ष रक्षाधुना ॥
ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥

## श्रीबिल्वाष्टकम् –

ॐ त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रिधायुधम् ।
त्रिजन्मपापसंहारमेकबिल्वं शिवार्पणम् ॥
त्रिशाखैर्बिल्वपत्रैश्च अच्छिद्रैः कोमलैः शुभैः ।
शिवपूजां करिष्यामि एकबिल्वं शिवार्पणम् ॥
अखण्डबिल्वपत्रेण पूजिते नन्दिकेश्वरे ।
शुद्ध्यते सर्वपापेभ्यः एकबिल्वं शिवार्पणम् ॥
शालग्रामशिलामेकां विप्राणां जातु अर्पयेत् ।
सोमयज्ञमहादानमेकबिल्वं शिवार्पणम् ॥
दन्तिकोटिसहस्राणि अश्वमेधशतानि च ।
कोटिकन्यामहादानमेकबिल्वं शिवार्पणम् ॥
लक्ष्म्याः स्तनत उत्पन्नं महादेवस्य च प्रियम् ।
बिल्ववृक्षं प्रयच्छामि एकबिल्वं शिवार्पणम् ॥
दर्शनं बिल्ववृक्षस्य स्पर्शनं पापनाशनम् ।
अघोरपापसंहारमेकबिल्वं शिवार्पणम् ॥
मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे ।
अग्रतः शिवरूपाय एकबिल्वं शिवार्पणम् ॥
बिल्वाष्टकमिदं पुण्यं यः पठेच्छिवसन्निधौ ।
सर्वपापविनिर्मुक्तः शिवलोकमवाप्नुयात् ॥

सेवन्तिका-बकुल-चम्पक-पाटलाब्जैः
पुन्नाग-जाति-करवीर-रसाल-पुष्पैः ।
बिल्व-प्रवाल-तुलसीदल-मालतीभि-
स्त्वां पूजयामि जगदीश्वर मे प्रसीद ॥

ॐ नानासुगन्धपुष्पाणि यथाकालोद्भवानि च ।
पुष्पाञ्जलिं मया दत्तं गृहाण परमेश्वर ॥
ॐ भूर्भुवः स्वः साम्बसदाशिवाय नमः मन्त्रपुष्पाञ्जलिं समर्पयामः ।

**विशेषार्घ्यनिवेदनम्–**

ॐ नमस्ते पार्वतीनाथ त्रैलोक्यवरदर्षभ ।
त्र्यम्बकेश महादेव गृहाणार्घ्यं नमोऽस्तु ते ॥
ॐ नमस्ते देवदेवेशि प्रपन्नभयहारिणि ।
अम्बिके वरदे देवि गृहाणार्घ्यं नमोऽस्तु ते ॥
ॐ भूर्भुवः स्वः भगवते साम्बसदाशिवाय नमः अर्घ्यं निवेदयामि ॥

**क्षमाप्रार्थना–**

आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि प्रसीद परमेश्वर ॥
विधिच्युतं भक्तिहीनमुपचारविवर्जितम् ।
यत्पूजितोऽसि भगवँस्तेनापीश प्रसीदसि ॥
ग्रहपीडाः प्रशाम्यन्तु भूतबाधा विनश्यतु ।
चोरादयोऽखिला रोगा विनश्यन्तु त्वदीक्षया ॥
शिवशङ्करविश्वात्मन् भूतेश्वर दयामय ।
भवत्स्मरणमात्रेण रक्ष नः पक्षवर्जितान् ॥
ॐ भूर्भुवः स्वः भगवते साम्बसदाशिवाय नमः ॥ इति क्षमापयेत् ।

**शिवपार्षदेभ्यो नैवेद्यार्पणम्–**

बाणरावणचण्डीशा नन्दीभृङ्गीरिटादयः ।
महादेवप्रसादन्ते सर्वे गृह्णन्तु शाम्भवाः ॥

**पूर्णपात्रदानम्–** (पूर्णपात्रं ब्राह्मणं च त्रिः सम्पूज्य)

ॐ पूर्णादर्वि परापत सुपूर्णा पुनरापत ।
वस्नेव विक्रीणावहाऽइषमूर्ज्जꣳशतक्रतो ॥
ॐ अद्येहेत्यादि पूर्वसङ्कल्पसिद्धिरस्तु श्रीपरमेश्वरसाम्बसदाशिवप्रीतये दीपगणेशकलशपूजनपूर्वकं श्रीसाम्बसदाशिवोपरि अविच्छिन्नजलधारया

अमुकसङ्ख्याकब्राह्मणद्वारा कृतस्य अमुकरुद्राभिषेककर्मणः अपूर्णपूरणार्थमिदं पूर्णपात्रं प्रजापतिदैवतं यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।

**दक्षिणासङ्कल्पः–**

ॐ अद्येह पूर्वसङ्कल्पसिद्धिरस्तु.......मम श्रीसाम्बसदाशिवप्रीतिद्वारा सर्वाभ्युदयावाप्तये अमुककामनासिद्ध्ये कृतस्य अमुकरुद्राभिषेककर्मणः साङ्गतायै इमां दक्षिणां (भूयसीसहितां) यथानामदैवतां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो यथाभागं विभज्य यथाकाले दातुमहं उत्सृजे । ततः गन्धपुष्पाक्षतादिभिः–

**विसर्जनम् –**

ॐ यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् ।
इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥
ॐ गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर ।
यत्र ब्रह्मादयो देवास्तत्र गच्छ सुरेश्वर ॥
ॐ आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजाञ्चैव न जानामि क्षमस्व परमेश्वर ॥

**कर्मसमर्पणम्–**

ॐ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पये तत् ॥

**अभिषेकमन्त्राः–**

ॐ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥

एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
आदित्यश्चन्द्रमा भौमो बुधजीवसिताऽर्कजाः ॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥
ऋषयो मुनयो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु धर्मकामार्थसिद्धये ॥

ॐ द्यौः शान्तिरन्तरिक्षꣳशान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः ॥ व्वनस्प्पतयः शान्तिर्व्विश्श्वेदेवाः शान्तिर्ब्ब्रह्मशान्तिः सर्व्वꣳ शान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥

ॐ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येमशरदः शतञ्जीवेमशरदः शतꣳ शृणुयामशरदः शतम्प्रब्रवामशरदः शतमदीनाः स्यामशरदः शतम्भूयश्च्चशरदः शतात् ॥

ॐ व्विश्श्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्द्रन्तन्नऽआसुव ॥
ॐ शान्तिः शान्तिः शान्तिः । सुशान्तिर्भवतु । अमृताभिषेकोऽस्तु ।

## रक्षाबन्धनम्–

ॐ यदाबध्नन्दाक्षायणाहिरण्यꣳशतानीकायसुमनस्यमानाः ॥
तन्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥
ॐ येन बद्धो बली राजा दानवेन्द्रो महाबलः ।
तेन त्वां प्रतिबध्नामि रक्षे मा चल मा चल ॥

## तिलकमन्त्राः–

ॐ स्वस्तिनऽइन्द्रोव्वृद्धश्रवाः स्वस्तिनः पूषाव्विश्श्ववेदाः ॥
स्वस्तिनस्ताक्क्ष्यो ऽअरिष्टनेमिःस्वस्तिनोबृहस्प्पतिर्द्दधातु ॥
ॐ आब्ब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यः शूरऽइषव्व्योतिव्व्याधीमहारथोजायतान्दोग्ध्रीधेनुर्व्वोढानड्वानाशुः सप्तिः

पुरन्धिर्योषाजिष्णूरथेष्ठाःसभेयोयुवास्ययजमानस्यव्वीरोजायतान्निकामेनिकामेनः पर्ज्जन्न्योव्वर्षतुफलवत्त्योनऽओषधयःपच्च्यन्तांयोगक्क्षेमोनः कल्प्पताम् ॥

ॐ पुनस्त्वादित्यारुद्रावसवः समीन्धतां पुनर्ब्रह्माणो वसुनीथयज्ञैः ।
घृतेन त्वं तन्वं वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥

ॐ दीर्घायुस्तऽओषधे खनिता यस्मै च त्वा खनाम्यहम् ॥
अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥

ॐ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते ।
धनं धान्यं पशुं बहुपुत्रलाभं शतसम्वत्सरं दीर्घमायुः ॥

मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ।
शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥

अस्मिन् कर्मणि यन्न्यूनातिरिक्तं तत्सर्वं भगवत्प्रसादात् ब्राह्मणवचनाच्च परिपूर्णमस्तु ।

ब्राह्मणाः– ॐ अस्तु परिपूर्णम् ।

ॐ शिवे भक्तिः शिवे भक्तिः शिवे भक्तिर्भवे भवे ।
अन्यथा शरणं नास्ति त्वमेव शरणं मम ॥
तस्मात्कारुण्यभावेन रक्ष मां जगदीश्वर ॥

ॐ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

ॐ अच्युताय नमः । ॐ अच्युताय नमः । ॐ अच्युताय नमः ।

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

*ॐ तत्सत् साम्बसदाशिवार्पणमस्तु ॥*



# लिङ्गाष्टकम्

ब्रह्ममुरारिसुरार्चितलिङ्गं निर्मलभासितशोभितलिङ्गम् ।
जन्मजदुःखविनाशकलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥१॥

देवमुनिप्रवरार्चितलिङ्गं कामदहं करुणाकरलिङ्गम् ।
रावणदर्पविनाशनलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥२॥

सर्वसुगन्धिसुलेपितलिङ्गं बुद्धिविवर्धनकारणलिङ्गम् ।
सिद्धसुरासुरवन्दितलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥३॥

कनकमहामणिभूषितलिङ्गं फणिपतिवेष्टितशोभितलिङ्गम् ।
दक्षसुयज्ञविनाशनलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥४॥

कुङ्कुमचन्दनलेपितलिङ्गं पङ्कजहारसुशोभितलिङ्गम् ।
सञ्चितपापविनाशनलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥५॥

देवगणार्चितसेवितलिङ्गं भावैर्भक्तिभिरेव च लिङ्गम् ।
दिनकरकोटिप्रभाकरलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥६॥

अष्टदलोपरि वेष्टितलिङ्गं सर्वसमुद्भवकारणलिङ्गम् ।
अष्टदरिद्रविनाशितलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥७॥

सुरगुरुसुरवरपूजितलिङ्गं सुरवनपुष्पसदार्चितलिङ्गम् ।
परात्परं परमात्मकलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥८॥

लिङ्गाष्टकमिदं पुण्यं यः पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥



# श्रीशिवपञ्चाक्षरस्तोत्रम्

नागेन्द्रहाराय त्रिलोचनाय भस्माङ्गरागाय महेश्वराय ।
नित्याय शुद्धाय दिगम्बराय तस्मै नकाराय नमः शिवाय ॥१॥
मन्दाकिनीसलिलचन्दनचर्चिताय नन्दीश्वरप्रमथनाथमहेश्वराय ।
मन्दारपुष्पबहुपुष्पसुपूजिताय तस्मै मकाराय नमः शिवाय ॥२॥
शिवाय गौरीवदनाब्जवृन्दसूर्याय दक्षाध्वरनाशकाय ।
श्रीनीलकण्ठाय वृषध्वजाय तस्मै शिकाराय नमः शिवाय ॥३॥
वसिष्ठकुम्भोद्भवगौतमार्यमुनीन्द्रदेवार्चितशेखराय ।
चन्द्रार्कवैश्वानरलोचनाय तस्मै वकाराय नमः शिवाय ॥४॥
यक्षस्वरूपाय जटाधराय पिनाकहस्ताय सनातनाय ।
दिव्याय देवाय दिगम्बराय तस्मै यकाराय नमः शिवाय ॥५॥
पञ्चाक्षरमिदं पुण्यं यः पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥६॥

*॥ इति शिवपञ्चाक्षरस्तोत्रं सम्पूर्णम् ॥*

# द्वादशज्योतिर्लिङ्गस्तोत्रम्

सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम् ।
उज्जयिन्यां महाकालमोङ्कारममलेश्वरम् ॥
परल्यां वैद्यनाथं च डाकिन्यां भीमशङ्करम् ।
सेतुबन्धे तु रामेशं नागेशं दारुकावने ॥
वाराणस्यां तु विश्वेशं त्र्यम्बकं गौतमीतटे ।
हिमालये तु केदारं घुश्मेशं च शिवालये ॥
एतानि ज्योतिर्लिङ्गानि सायं प्रातः पठेन्नरः ।
सप्तजन्मकृतं पापं स्मरणेन विनश्यति ॥

*॥ इति द्वादशज्योतिर्लिङ्गस्तोत्रं सम्पूर्णम् ॥*

# श्रीशिवताण्डवस्तोत्रम्

जटाटवी-गलज्जल-प्रवाह-पावित-स्थले
गलेऽवलम्ब्य लम्बितां भुजङ्गतुङ्गमालिकाम् ।
डमड्डमड्डमड्डमन्निनादवड्डमर्वयं
चकार चण्डताण्डवं तनोतु नः शिवः शिवम् ॥१
जटाकटाहसंभ्रमभ्रमन्निलिम्पनिर्झरी
विलोलवीचिवल्लरीविराजमानमूर्धनि ।
धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके
किशोरचन्द्रशेखरे रतिः प्रतिक्षणं मम ॥२
धराधरेन्द्रनन्दिनीविलासबन्धुबन्धुर–
स्फुरद्दिगन्तसन्ततिप्रमोदमानमानसे ।
कृपाकटाक्षधोरणीनिरुद्धदुर्धरापदि
क्वचिद्दिगम्बरे मनो विनोदमेतु वस्तुनि ॥३

घनघोर जटारूपी जङ्गलबाट वेगपूर्वक प्रवाहित भएको गङ्गाजीको जलको धाराले पवित्र बनेको गलामा झुण्डिएर रहेको सर्पराजको लामो माला धारण गर्नुहुने, डमडम डमरु बजाएर प्रखर ताण्डव नृत्य गर्ने सिपालु शिव भगवान्ले हामी सबैको कल्याण गर्नुहोस् ।१॥

जुन शिवजीको शिर, जटारूपी कराईमा अतिवेगपूर्वक घुमिरहेकी गङ्गाजीको अति चञ्चल तरङ्गरूपी लहराहरूद्वारा सुशोभित बनेको छ, जसको निधारमा रहेको अग्नि धपधप बलेको छ र शिरमा सानो अर्ध चन्द्रमा विराजमान छ, त्यस्ता भगवान् शिवमा मेरो निरन्तर प्रेम रहोस् ॥२॥

हिमालयराजकी पुत्री पार्वतीसँग रमण गर्ने बेला उपयोगी मनोहर शिरोभूषणद्वारा सम्पूर्ण दिशाहरू प्रकाशित भएको देखेर जसको मन आनन्दित भइरहेको छ, जसको निरन्तर कृपादृष्टिद्वारा जस्तोसुकै आपत्ति पनि हट्न जान्छ, यस्ता कुनै दिगम्बर तत्त्वप्रति मेरो मन हर्षित रहोस् ॥३॥

जसको जटाको वरिपरि झुम्मिएका सर्पका फणामा रहेका मणिहरूको प्रकाशपुञ्जरूपी कुङ्कुमादि चन्दनले दिशारूपी नारीहरूका मुहारमा अनुलेप गरिरहेको छ । अनि मदमत्त हात्तीको थोरै कम्पन भइरहेको छालाको उत्तरीयवस्त्र (च्यादर) धारण गरेर सुशोभित हुनुभएका भगवान् भूतनाथमा मेरो मन सधैँ विलासपूर्वक रमाओस् ॥४॥

जटाभुजङ्गपिङ्गलस्फुरत्फणामणिप्रभा–
कदम्बकुङ्कुमद्रवप्रलिप्तदिग्वधूमुखे ।
मदान्धसिन्धुरस्फुरत्वगुत्तरीयमेदुरे
मनोविनोदमद्भुतं बिभर्तु भूतभर्तरि ॥४

सहस्रलोचनप्रभृत्यशेषलेखशेखर–
प्रसूनधूलिधोरणीविधूसराङ्घ्रिपीठभूः।
भुजङ्गराजमालया निबद्धजाटजूटकः
श्रियै चिराय जायतां चकोरबन्धुशेखरः ॥५

ललाटचत्वरज्वलद्धनञ्जयस्फुलिङ्गभा-
निपीतपञ्चसायकं नमन्निलिम्पनायकम् ।
सुधामयूखलेखया विराजमानशेखरं
महाकपालिसम्पदे शिरो जटालमस्तु नः ॥६

करालभालपट्टिकाधगद्धगद्धगज्ज्वल–
द्धनञ्जयाधरीकृतप्रचण्डपञ्चसायके ।
धराधरेन्द्रनन्दिनीकुचाग्रचित्रपत्रक–
प्रकल्पनैकशिल्पिनि त्रिलोचने मतिर्मम ॥७

---

जसको चरणपादुका (खराउ) सम्पूर्ण इन्द्रादि देवताहरूको (शिरोनमनपूर्वक प्रणाम गरेका कारण) शिरमा रहेका फूलहरूको परागले धुस्रो बनेको छ, नागरूपी हारले बाँधिएको जटा धारण गर्ने त्यस्ता चन्द्रशेखर भगवान्‌ले मलाई चिरस्थायी सम्पत्ति प्रदान गर्नुहोस् ॥५॥

जसेको निधाररूपी वेदीमा धपक्क बलेको अग्निको सानो झिल्काको तेजले कामदेव नष्ट भयो र जसलाई इन्द्रले पनि नमस्कार गर्छन्, त्यस्ता चन्द्रमाको कलाहरूद्वारा सुशोभित मुकुट धारण गर्ने शिवजीको उच्च विशाल ललाट र जटा भएको शिर, हाम्रो सम्पत्तिको होस् ॥६॥

जसले आफ्नो विकराल निधारमा धपधप बल्दै गरेको अग्निमा प्रचण्ड कामदेवलाई हवन गर्नुभएको थियो, हिमालयराजपुत्री पार्वतीको स्तनको अग्रभागमा पत्रभङ्गरचना गर्न एकमात्र शिल्पकार हुनुभएका त्यस्ता तीन नेत्र भएका भगवान् शिवजीमा मेरो मन लागिरहोस् ॥७॥

जसको गलामा नयाँ मेघमालाद्वारा घेरिएको औँसीको आधारातको निष्पट्ट अँध्यारो जस्तै कालोपन अङ्कित छ, त्यस्ता हात्तीको छाला लगाउनुहुने, संसारभारको

नवीनमेघमण्डलीनिरुद्धदुर्धरस्फुरत्-
कुहूनिशीथिनीतमःप्रबन्धबद्धकन्धरः ।
निलिम्पनिर्झरीधरस्तनोतु कृत्तिसिन्धुरः
कलानिधानबन्धुरः श्रियं जगद्धुरन्धरः ॥८
प्रफुल्लनीलपङ्कजप्रपञ्चकालिमप्रभा-
वलम्बिकण्ठकन्धरारुचिप्रबद्धकन्धरम् ।
स्मरच्छिदं पुरच्छिदं भवच्छिदं मखच्छिदं
गजच्छिदन्धकच्छिदं तमन्तकच्छिदं भजे ॥९
अगर्वसर्वमङ्गलाकलाकदम्बमञ्जरी–
रसप्रवाहमाधुरीविजृम्भणामधुव्रतम् ।
स्मरान्तकं पुरान्तकं भवान्तकं मखान्तकं
गजान्तकान्धकान्तकं तमन्तकान्तकं भजे ॥१०
जयत्वदभ्रविभ्रमभ्रमद्भुजङ्गमस्फुर–
द्धगद्धगद्विनिर्गमत्करालभालहव्यवाट् ।
धिमिद्धिमिद्धिमिध्वनन्मृदङ्गतुङ्गमङ्गल–
ध्वनिक्रमप्रवर्तितप्रचण्डताण्डवः शिवः ॥११

---

धारण गर्ने चन्द्रमाको सम्पर्कद्वारा मनोहर कान्ति भएका गङ्गाधर भगवान् शिवजीले मेरो ऐश्वर्यहरूको विस्तार गर्नुहोस् ॥८॥

जसको कण्ठभाग फुलिरहेको नीलकमलको नीलो किरणको अनुकरण गर्ने हरिणीको जस्तो कान्तियुक्त चिह्नले सुशोभित छ तथा जो कामदेव, त्रिपुरासुर, भव(संसार), दक्षको यज्ञ, हात्ती, अन्धकासुर र काललाई पनि नाश गर्नेवाला हुनुहुन्छ त्यस्ता भगवान्को म सेवा गर्छु ॥९॥

जो अहङ्काररहित पार्वतीको कलारूप कदम्बमञ्जरीको मधुर रसको स्रोतमा व्याप्त भई बढिरहेको मधुरतालाई पिउने भँवरोसमान हुनुहुन्छ, त्यस्तै जो कामदेव, त्रिपुर, भव, दक्षयज्ञ, अन्धकासुर र यमराजको पनि काल हुनुहुन्छ त्यस्ता भगवान् शङ्करको म सेवा गर्छु ॥१०॥

जसको शिरमा ठूलो वेगका साथ घुमिरहेका सर्पहरूको फ्वाँ-फ्वाँ शब्दहरूद्वारा निधारको भयङ्कर अग्नि धपधप बली बिस्तारै सर्वत्र फैलिरहेको छ, साथै धिमिधिमि बजिरहेको मृदङ्गको गम्भीर, मङ्गलध्वनिको तालमा जसको प्रखर ताण्डव नृत्य भइरहेको छ, त्यस्ता भगवान् शिवको जय होस् ॥११॥

दृषद्विचित्रतल्पयोर्भुजङ्गमौक्तिकस्रजो-
गरिष्ठरत्नलोष्ठयोः सुहृद्विपक्षपक्षयोः ।
तृणारविन्दचक्षुषोः प्रजामहीमहेन्द्रयोः
समं प्रवर्तयन्मनः कदा सदाशिवं भजे ॥१२

कदा निलिम्पनिर्झरीनिकुञ्जकोटरे वसन्
विमुक्तदुर्मतिः सदा शिरःस्थमञ्जलिं वहन्।
विलोललोललोचनो ललामभाललग्नकः
शिवेति मन्त्रमुच्चरन्कदा सुखी भवाम्यहम् ॥१३

इमं हि नित्यमेवमुक्तमुत्तमोत्तमं स्तवं
पठन्स्मरन्ब्रुवन्नरो विशुद्धिमेति सन्ततम् ।
हरे गुरौ सुभक्तिमाशु याति नान्यथा गतिं
विमोहनं हि देहिना सुशङ्करस्य चिन्तनम् ॥१४

पूजावसानसमये दशवक्त्रगीतं यः शम्भुपूजनपरं पठति प्रदोषे ।
तस्य स्थिरां रथगजेन्द्रतुरङ्गयुक्तां लक्ष्मीं सदैव सुमुखीं प्रददाति शम्भुः॥

*॥ इति रावणविरचितं शिवताण्डवस्तोत्रं सम्पूर्णम् ॥*

---

पत्थर र सुन्दर बिछ्यौनामा, सर्प र मोतीको मालामा, बहुमूल्य रत्न र माटोको डल्लोमा, मित्र र शत्रुको पक्षमा, झारजस्तो र कमलजस्तो आँखा भएकी तरुणीमा, प्रजा र पृथ्वीपालक महाराजमा समेत समान भाव राख्दै म कहिले भगवान्‌को भजन गरूँला ॥१२॥

सुन्दर निधार भएका भगवान् चन्द्रशेखरमा मन लगाएर आफ्ना कुविचारलाई त्याग्दै गङ्गाजीको किनारमा रहेको निकुञ्जभित्र बसेर शिरमा हात जोडी आत्तिएको विह्वल आँखा भएको म (रावण) 'शिव' मन्त्रको उच्चारण गर्दै सुखी हुन कहिले पाऊँला ? ॥१३॥

जसले यो उत्तम स्तोत्रको सधैँ पाठ, सम्झना र वर्णन गर्दछ, त्यो व्यक्ति सधैँ शुद्ध बन्दछ र चाँडै नै पूज्य भगवान् शिवजीको श्रेष्ठ भक्ति प्राप्त गर्दछ । ऊ कुमार्गमा कदापि लाग्दैन किनभने भगवान्‌को चिन्तनले नै प्राणीहरूको सम्पूर्ण मोहलाई नाश गर्दछ ॥१४॥

सायङ्कालमा पूजा सकिएपछि रावणले गाएको यस शिवपूजनसम्बन्धी स्तोत्रको जसले नित्य पाठ गर्दछ, त्यस व्यक्तिलाई भगवान् शङ्करले रथ, हात्ती, घोडासहित सधैँ अचल सम्पत्ति प्रदान गर्नुहुन्छ ॥१५॥

# श्रीरुद्राष्टकम्

नमामीशमीशाननिर्वाणरूपं विभुं व्यापकं ब्रह्म वेदस्वरूपम् ।
निजं निर्गुणं निर्विकल्पं निरीहं चिदाकाशमाकाशवासं भजेऽहम् ॥१॥

निराकारमोङ्कारमूलं तुरीयं गिराज्ञानगोऽतीतमीशं गिरीशम् ।
करालं महाकालकालं कृपालुं गुणागारसंसारपारं नतोऽहम् ॥२॥

तुषाराद्रिसङ्काशगौरं गभीरं मनोभूतकोटिप्रभाश्रीशरीरम् ।
स्फुरन्मौलिकल्लोलिनीचारुगङ्गालसद्भालबालेन्दु कण्ठे भुजङ्गा ॥३॥

चलत्कुण्डलं शुभ्रनेत्रं विशालं प्रसन्नाननं नीलकण्ठं दयालुम् ।
मृगाधीशचर्माम्बरं मुण्डमालं प्रियं शङ्करं सर्वनाथं भजामि ॥४॥

प्रचण्डं प्रकृष्टं प्रगल्भं परेशमखण्डं अजं भानुकोटिप्रकाशम् ।
त्रयःशूलनिर्मूलनं शूलपाणिं भजेऽहं भवानीपतिं भावगम्यम् ॥५॥

कलातीतकल्याणकल्पान्तकारी सदा सज्जनानन्ददाता पुरारिः ।
चिदानन्दसन्दोहमोहापहारी प्रसीद प्रसीद प्रभो मन्मथारिः ॥६॥

न यावद् उमानाथपादारविन्दं भजन्तीह लोके परे वा नराणाम् ।
न तावत्सुखं शान्ति सन्तापनाशं प्रसीद प्रभो सर्वभूताधिवासम् ॥७॥

न जानामि योगं जपं नैव पूजां नतोऽहं सदा सर्वदा शम्भु तुभ्यम् ।
जराजन्मदुःखौघतातप्यमानं प्रभो पाहि आपन्नमामीश शम्भो ॥८॥

रुद्राष्टकमिदं प्रोक्तं विप्रेण हरतुष्टये ।
ये पठन्ति नरा भक्त्या तेषां शम्भुः प्रसीदति॥

॥ इति तुलसीदासविरचितं रुद्राष्टकं सम्पूर्णम् ॥

# श्रीपशुपत्यष्टकम्

पशुपतिं द्युपतिं धरणीपतिं भुजगलोकपतिं च सतीपतिम् ।
प्रणतभक्तजनार्तिहरं परं भजत रे मनुजा गिरिजापतिम् ॥१॥

न जनको जननी न च सोदरो न तनयो न च भूरिबलं कुलम् ।
अवति कोऽपि न कालवशङ्गतं भजत रे मनुजा गिरिजापतिम् ॥२॥

मुरजडिण्डिमवाद्यविलक्षणं मधुरपञ्चमनादविशारदम् ।
प्रमथभूतगणैरपि सेवितं भजत रे मनुजा गिरिजापतिम् ॥३॥

शरणदं सुखदं शरणान्वितं शिवशिवेति शिवेति नतं नृणाम् ।
अभयदं करुणावरुणालयं भजत रे मनुजा गिरिजापतिम् ॥४॥
नरशिरोरचितं मणिकुण्डलं भुजगहारमुदं वृषभध्वजम् ।
चितिरजोधवलीकृतविग्रहं भजत रे मनुजा गिरिजापतिम् ॥५॥
मखविनाशकरं शशिशेखरं सततमध्वरभाजि फलप्रदम् ।
प्रलयदग्धसुरासुरमानवं भजत रे मनुजा गिरिजापतिम् ॥६॥
मदमपास्य चिरं हृदि संस्थितं मरणजन्मजराभयपीडितम् ।
जगदुदीक्ष्य समीपभयाकुलं भजत रे मनुजा गिरिजापतिम् ॥७॥
हरिविरञ्चिसुरासुरपूजितं यमजनेशधनेशनमस्कृतम् ।
त्रिनयनं भुवनत्रितयाधिपं भजत रे मनुजा गिरिजापतिम् ॥८॥
पशुपतेरिदमष्टकमद्भुतं विरचितं पृथिवीपतिसूरिणा ।
पठति संशृणुते मनुजः सदा शिवपुरिं वसते लभते मुदम् ॥९॥

*॥ इति पशुपत्यष्टकं सम्पूर्णम् ॥*

## दारिद्र्यदहनशिवस्तोत्रम्

विश्वेश्वराय नरकार्णवतारणाय कर्णामृताय शशिशेखरधारणाय ।
कर्पूरकान्तिधवलाय जटाधराय दारिद्र्यदुःखदहनाय नमः शिवाय ॥१
भक्तिप्रियाय भवरोगभवापहाय उग्राय दुर्गभवसागरतारणाय ।
ज्योतिर्मयाय गुणनामसु नृत्यकाय दारिद्र्यदुःखदहनाय नमः शिवाय ॥२
गौरिप्रियाय रजनीशकलाधराय कालान्तकाय भुजगाधिपकङ्कणाय ।
गङ्गाधराय गजराजविमर्दनाय दारिद्र्यदुःखदहनाय नमः शिवाय ॥३
चर्माम्बराय शवभस्मविलेपनाय भालेक्षणाय मणिकुण्डलमण्डिताय ।
मञ्जीरपादयुगलाय जटाधराय दारिद्र्यदुःखदहनाय नमः शिवाय ॥४
पञ्चाननाय फणिराजविभूषणाय हेमांशुकाय भुवनत्रयमण्डिताय ।
आनन्दभूमिवरदाय तमोमयाय दारिद्र्यदुःखदहनाय नमः शिवाय ॥५
भानुप्रियाय भवसागरतारणाय कालान्तकाय कमलासनपूजिताय ।
नेत्रत्रयाय शुभलक्षणलक्षिताय दारिद्र्यदुःखदहनाय नमः शिवाय ॥६
रामप्रियाय रघुनाथवरप्रदाय नामप्रियाय नरकार्णवतारणाय ।
पुण्येषु पुण्यभरिताय सुरार्चिताय दारिद्र्यदुःखदहनाय नमः शिवाय ॥७

*॥ इति दारिद्र्यदहनशिवस्तोत्रं सम्पूर्णम् ॥*

# श्रीसूक्तम्

ॐ हिरण्यवर्णामितिपञ्चदशर्चस्य सूक्तस्य आनन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः श्रीर्देवता आद्यास्तिस्रोऽनुष्टुभः चतुर्थी बृहती पञ्चमीषष्ठ्यौ त्रिष्टुभौ ततोऽष्टावनुष्टुभः अन्त्या प्रस्तारपङ्क्तिच्छन्दः जपे विनियोगः ।

हरिः ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मऽआवह ॥१॥
तां मऽआवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥
अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मा देवीजुषताम् ॥३॥
कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥४॥
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥५॥
आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मा यान्तरा याश्च बाह्या अलक्ष्मीः ॥६॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन्कीर्तिमृद्धिं ददातु मे ॥७॥
क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥८॥
गन्धद्वारान्दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥
मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥
कर्दमेन प्रजा भूता मयि सम्भव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥११॥
आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ॥१२॥
आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मऽआवह ॥१३॥

आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो मऽआवह ॥१४॥
तां मऽआवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥१५॥
यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥१६॥

*॥ इति श्रीसूक्तम् सम्पूर्णम् ॥*

# सरस्वतीस्तोत्रम्

रविरुद्रपितामहविष्णुनुतं, हरिचन्दनकुङ्कुमपङ्कयुतम् ।
मुनिवृन्दगणेन्द्रसमानयुतं, तव नौमि सरस्वति पादयुगम् ॥१॥
शशिशुद्धसुधाहिमधामयुतं, शरदम्बरबिम्बसमानकरम् ।
बहुरत्नमनोहरकान्तियुतं तव नौमि सरस्वति पादयुगम् ॥२॥
कनकाब्जविभूषितभूतिभवं, भवभावविभाषितभिन्नपदम् ।
प्रभुचित्तसमाहितसाधुपदं, तव नौमि सरस्वति पादयुगम् ॥३॥
भवसागरमज्जनभीतिनुतं, प्रतिपादितसन्ततिकारमिदम् ।
विमलादिकशुद्धविशुद्धपदं, तव नौमि सरस्वति पादयुगम् ॥४॥
मतिहीनजनाश्रयपादमिदं, सकलागमभाषितभिन्नपदम् ।
परिपूरितविश्वमनेकभवं, तव नौमि सरस्वति पादयुगम् ॥५॥
परिपूर्णमनोरथधामनिधिं, परमार्थविचारविवेकनिधिम् ।
सुरयोषितसेवितपादतलं, तव नौमि सरस्वति पादयुगम् ॥६॥
सुरमौलिमणिद्युतिशुभ्रकरं, विषयादिमहाभयवर्णहरम् ।
निजकान्तिविलेपितचन्द्रशिवं, तव नौमि सरस्वति पादयुगम् ॥७॥
गुणनैककुलस्थितिभीतिपदं, गुणगौरवगर्वितसत्यपदम् ।
कमलोदरकोमलपादतलं, तव नौमि सरस्वति पादयुगम् ॥८॥
त्रिसन्ध्यं यः पठेन्नित्यं जले वापि स्थले स्थितः ।
पाठमात्राद् भवेत्प्राज्ञो ब्रह्मनिष्ठः पुनः पुनः॥

*॥ इति सरस्वतीस्तोत्रं सम्पूर्णम् ॥*

# श्रीभवान्यष्टकम्

न तातो न माता न बन्धुर्न दाता न पुत्रो न पुत्री न भृत्यो न भर्ता ।
न जाया न विद्या न वृत्तिर्ममैव गतिस्त्वं गतिस्त्वं त्वमेका भवानि ॥१॥

भवाब्धावपारे महादुःखभीरुः पपात प्रकामी प्रलोभी प्रमत्तः ।
कुसंस्कारपाशप्रबद्धः सदाहं गतिस्त्वं गतिस्त्वं त्वमेका भवानि ॥२॥

न जानामि दानं न च ध्यानयोगं न जानामि तन्त्रं न च स्तोत्रमन्त्रम् ।
न जानामि पूजां न च न्यासयोगं गतिस्त्वं गतिस्त्वं त्वमेका भवानि ॥३॥

न जानामि पुण्यं न जानामि तीर्थं न जानामि मुक्तिं लयं वा कदाचित् ।
न जानामि भक्तिं व्रतं वापि मातर्गतिस्त्वं गतिस्त्वं त्वमेका भवानि ॥४॥

कुकर्मी कुसङ्गी कुबुद्धिः कुदासः कुलाचारहीनः कदाचारलीनः ।
कुदृष्टिः कुवाक्यप्रबन्धः सदाहं गतिस्त्वं गतिस्त्वं त्वमेका भवानि ॥५॥

प्रजेशं रमेशं महेशं सुरेशं दिनेशं निशीथेश्वरं वा कदाचित् ।
न जानामि चान्यत्सदाहं शरण्ये गतिस्त्वं गतिस्त्वं त्वमेका भवानि ॥६॥

विवादे विषादे प्रमादे प्रवासे जले चानले पर्वते शत्रुमध्ये ।
अरण्ये शरण्ये सदा मां प्रपाहि गतिस्त्वं गतिस्त्वं त्वमेका भवानि ॥७॥

अनाथो दरिद्रो जरारोगयुक्तो महाक्षीणदीनः सदा जाड्यवक्त्रः ।
विपत्तौ प्रविष्टः प्रणष्टः सदाहं गतिस्त्वं गतिस्त्वं त्वमेका भवानि ॥८॥

*॥ इति भवान्यष्टकं सम्पूर्णम् ॥*

# दक्षिणामूर्तिस्तोत्रम्

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतम्
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयम्
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥१॥

बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुन-
र्मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् ।
मायावीव विजृम्भयत्यपि महायोगीव यः स्वेच्छया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥२॥

यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थकं भासते
साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् ।
यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवाम्भोनिधौ
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥३॥
नाना-च्छिद्र-घटोदर-स्थित-महादीप-प्रभा-भास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते ।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥४॥
देहम्प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः
स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वादिनः ।
मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥५॥
राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादनात्
सन्मात्रःकरणोपसंहरणतो योऽभूत्सुषुप्तः पुमान् ।
प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥६॥
बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि
व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा ।
स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥७॥
विश्वं पश्यति कार्यकारणतया स्वस्वामिसम्बन्धतः
शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः ।
स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामित-
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥८॥
भूरम्भांस्यनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमान्
इत्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् ।
नान्यत्किञ्चन विद्यते विमृशतां यस्मात्परस्माद्विभो-
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥९॥
सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिँस्स्तवे
तेनास्य श्रवणात्तथार्थमननाद्ध्यानाच्च सङ्कीर्तनात् ।
सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः

सिद्ध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम् ॥१०॥

वटविटपिसमीपे भूमिभागे निषण्णं
सकलमुनिजनानां ज्ञानदातारमारात् ।
त्रिभुवनगुरुमीशं दक्षिणामूर्तिदेवं
जननमरणदुःखच्छेददक्षं नमामि ॥११॥

चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा ।
गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥१२॥

*॥ श्रीमच्छङ्कराचार्यविरचितं दक्षिणामूर्तिस्तोत्रं सम्पूर्णम् ॥*

# अच्युताष्टकम्

अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम् ।
श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचन्द्रं भजे ॥१॥

अच्युतं केशवं सत्यभामाधवं माधवं श्रीधरं राधिकाराधितम् ।
इन्दिरामन्दिरं चेतसा सुन्दरं देवकीनन्दनं नन्दजं सन्दधे ॥२॥

विष्णवे जिष्णवे शङ्खिने चक्रिणे रुक्मिणीरागिणे जानकीजानये ।
वल्लवीवल्लभायार्चितायात्मने कंसविध्वंशिने वंशिने ते नमः ॥३॥

कृष्ण गोविन्द हे राम नारायण श्रीपते वासुदेवाजित श्रीनिधे ।
अच्युतानन्त हे माधवाधोक्षज द्वारकानायक द्रौपदीरक्षक ॥४॥

रक्षसा क्षोभितः सीतया शोभितो दण्डकारण्यभूपुण्यताकारणः ।
लक्ष्मणेनान्वितो वानरैःसेवितोऽगस्त्यसम्पूजितो राघवः पातु माम् ॥५॥

धेनुकारिष्टकानिष्टकृद्द्वेषिहा केशिहा कंसहृद् वंशिकावादकः ।
पूतनाकोपकः शूरजाखेलनो बालगोपालकः पातु मां सर्वदा ॥६॥

विद्युदुद्योतवत्प्रस्फुरद्वाससं प्रावृडम्भोदवत्प्रोल्लसद्विग्रहम् ।
वन्यया मालया शोभितोरःस्थलं लोहिताङ्घ्रिद्वयं वारिजाक्षं भजे ॥७॥

कुञ्चितैः कुन्तलैर्भ्राजमानाननं रत्नमौलिं लसत्कुण्डलं गण्डयोः ।
हारकेयूरकं कङ्कणप्रोज्वलं किङ्किणीमञ्जुलं श्यामलं तं भजे ॥८॥

अच्युतस्याष्टकं यः पठेदिष्टदं प्रेमतः प्रत्यहं पूरुषः सस्पृहम् ।
वृत्ततः सुन्दरं कर्तृविश्वम्भरस्तस्य वश्यो हरिर्जायते सत्वरम् ॥९॥

*॥ इत्यच्युताष्टकं सम्पूर्णम् ॥*

# श्रीगण्डकीस्तोत्रम्

समस्ताघहारि प्रभूतं मुरारेश्च्युतं गण्डयुग्मागतस्वेदरूपम् ।
त्वदीयं जलं ये स्पृशन्ति प्रशस्तं शुभं गण्डकि प्राणिनस्ते हि धन्याः ॥१॥

त्वदीयां स्तुतिं को विधातुं समर्थो विना नारदं तुम्बुरुं वापि लोके।
क्षमस्वाम्ब धार्ष्ट्यं यमेतत्त्वदीया स्तुतिर्मामियं प्रेरयत्येव नूनम् ॥२॥

सुधापानतो लेभिरे येऽमरत्वं सुरास्तेऽपि भीताः सदा कालतो वै।
त्वदम्भःसुधां ये पिबन्ति प्रकृष्टां न तेषां हि भीतिः कुतश्चित् कथञ्चित् ॥३॥

नरो वानरः कुञ्जरो वा खरो वा चरः स्थावरो भूचरः खेचरो वा।
मृतस्त्वत्तटे याति वैकुण्ठलोकं चतुर्बाहुयुक्तो मुदा पीतवासाः ॥४॥

अहो देवि धन्यासि वैकुण्ठनाथस्त्वदन्तर्गतो यच्छिलाचक्ररूपः।
शिलाचक्ररूपो मुरारिर्हि साक्षान्न वा तत्र कार्या नृभिर्ग्रावबुद्धिः ॥५॥

सुवृत्तां सुचक्रां शिलामञ्जनाभां जना भाग्यवन्तः कदाचिल्लभन्ते।
हरं वा हरिं वा मृडानीं हि तस्यां धिया भावयन्तः कृतार्था हि ते स्युः ॥६॥

त्वदन्या सुधन्या धुनी कास्ति पुण्या विना विष्णुपादोद्भवां जह्नुकन्याम्।
उभे पुण्यतोये तटिन्यौ हि धन्ये शुभा गण्डकी वैष्णवी चापि गङ्गा ॥७॥

रमाहैमवत्योर्न चास्त्येव भेदस्तथा पुण्यधुन्योरपीह प्रसिद्धः ।
द्वयोरन्तरं नैव पश्यन्ति विज्ञा वशिष्ठादयो ये मुनीनां वरिष्ठाः ॥८॥

रवीन्दुग्रहे त्वं कुरुक्षेत्रपुण्या सदा माघमासे प्रयागेण तुल्या ।
पितृश्राद्धकाले गयापुण्यदात्री मृतौ काशिका मुक्तिदासि प्रसिद्धा ॥९॥

त्वमेवासि गङ्गा तरङ्गाभिरम्या कलिन्दात्मजा त्वं कलेर्दोषहन्त्री ।
स्तुता नर्मदा शर्मदा देववृन्दैस्तथा गोमती गौतमादिस्तुता त्वम् ॥१०॥

भुजङ्गप्रयातं पठेद्यस्तु भक्त्या ध्रुवं गण्डकीगङ्गयोः स्नानपुण्यम्।
लभेत्पादपद्मे समाधाय चित्तं मुरारेः प्रसन्नं प्रपन्नार्तिहन्तुः ॥११॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं गण्डकीस्तोत्रम् ॥

# गण्डकीस्तुतिः

जय गण्डकि पापनाशिनि जय नारायणि मोक्षदायिनि ।
जय देवि कदम्बधारिणि जय मातर्विमले नमोऽस्तु ते ॥

*देवघट्टस्नानमहिमा (वराहे)*

तस्मिन्ह्रदे महापुण्ये पुण्यनद्योस्तु सङ्गमे ।
स्नानाच्छताश्वमेधानां फलं प्राप्नोति मानवः ॥१॥
स्नात्वा तत्र तु वैशाखे गोसहस्रफलं लभेत् ।
माघमासे पुनः स्नात्वा प्रयागस्नानजं फलम् ॥२॥
गङ्गायमुनयोर्यद्वच्छङ्गमो मर्त्यदुर्लभः ।
तथैवायं देवनद्योस्सङ्गमः समुदाहृतः ॥३॥

*गण्डकीस्नानमन्त्रः–*

यत्र विष्णुः प्राङ्मुखश्च शिवः प्रत्यङ्मुखः स्थितः ।
रक्षार्थं सततं तत्र क्षेत्रे हरिहराभिधे ॥१॥
सितासिते सरिच्छ्रेष्ठे देवानामपि दुर्लभे ।
युवयोः सङ्गमे ह्यादिप्रयागे स्नामि सिद्धये ॥२॥
हरिगण्डसमुद्भूते सुरासुरनमस्कृते ।
अघौघशमने देवि पापं मे हर गण्डकि ॥३॥

*॥ इति गण्डकीस्तुतिः ॥*



